## ५२२० श्री. शां. ज्ञा. भं. खंभात.

श्रीउत्तराध्ययनबृहद्वृत्तिः ता. प्र. २

श्रीश्रीमालपुरीयधर्कटमहावंशः सुपर्वोज्वलः, सच्छायः सरलः सुमूलसहितः ख्यातोऽस्तिभूमंडले ॥
यक्षाख्योऽथ बभूव तत्र गुणभृन्मान्यः क्षितीशैरपि । ज्यायो वृद्धविभूषितोऽमलतनुर्मुक्ताफलप्रोज्वलः ॥१॥
विहितविशदचित्तः पात्रविन्यस्तवित्तः । प्रतिदिनशुभचर्यः सूव्रतः शिष्टधुर्यः ॥
निरुपमशमभूनिः सद्यशःश्री निधानं । नयविनयवरिष्टः श्रावकः सत्प्रतिष्ठः ॥ २ ॥
प्रीत्या जिनस्त्रिभुवनप्रभुरेकएव चित्ते निवृत्तभवसंगतिहेतुदोषः ॥
तच्छासनोदितनयानुगता च वृत्तिर्वाक्काययोरुचितभाषणकृत्यपूता ॥ ३ ॥
उदारता दक्षिणता कृतज्ञता विवेकिता सज्जनसङ्गचित्तता । .... ....
इत्यादयो यत्र गुणातिराग .... .... .... .... .... ॥ ४ ॥
पत्नीबभूव सा तस्य यशोदेवी विवर्जिता । दूषणैर्गुणरत्नौधखानिभिर्धूतकुग्रहा .... ॥ ५ ॥
अथाभूवन् सुतास्तस्या श्चत्वारोऽपि विचक्षणाः । देवचंद्र इति ज्येष्टः प्रद्युम्नाख्यस्तथापरः ॥ ६ ॥
शांते गेंह मच्छ शांतियशोभूभिस्तथा जसः । प्रधान लोक पान .... .... ॥ ७ ॥
शीलाः विशिष्ट लोकैरभिनंदनीया । नरार्थ वत् ख्यातिरवा पृथिव्यां .... .... ॥ ८ ॥
अथासौ सा यशोदेवी, संवेगात्सिद्ध मानसा । एकदा चिन्तयामास, संसारं वीक्ष्य दुस्तरं ॥ ९ ॥
आयु(वायु)र्विधूतचूतलतिकालोलं वयो विस्फुरद्विद्युद्दीतिचलं स्मरार्त्त तरु शिव भंगुरा श्रीर्वे (?)
य सौख्यमोक्षकृदहो धर्मः परं सेव्यते .... .... .... .... .... .... ॥ १० ॥
प्रभवति स च ज्ञानात् तच्चार्हदागमतः सच प्रतिकल (मनु) गलत्प्रज्ञैर्ज्ञेयो विना नहि पुस्तकं ।
इति तदमलचक्षुः पुंसां कुबोधविषौषधं । शिवसुखकरं लेख्यं लोकद्वयीहितकृत्परं .... ॥ ११ ॥

किंच—

कामोद्दामदवैकथौ(यो)गसवराकीर्णे .... .... तां । मूढानां दृढमंगिनां विषयतृट्खेदच्छिदे तन्यते ॥
धन्यैर्येन मतं विलेख्य विधिना ज्ञानामृतांभःप्रपा .... .... .... .... .... ॥ १२ ॥

उक्तं च ज्ञानदानं तदिह जिनपतिःकैवलालोकमाप्य,
त्रैलोक्यं बोधयिष्यन् समवसृति (गतः) पूर्वमेवाख्यदेवं ।
भो भव्या ! मोक्षसौख्यं .... .... .... तायां सुकृतकृति सदा वर्त्तितव्यं क्रियायां ॥ १३ ॥

यतः—

अज्ञानतः कृत्यविधौ प्रवृत्तो, न प्राप्नुर्या दैहिकमप्युपेयं ।
सर्वा (स्वर्गा) पवर्गोद्भवसौख्य रूपं, पारत्रिकं किं पुनराहतोऽपि ? ॥ १४ ॥

ज्ञात्वा चित्रितमेतदस्तविविधव्यापक(द)व्रजं भक्तिवाः सेकादुत्कटकंटकोत्करमिपप्रोद्भूतपुण्यांकुरः ।
अर्हत्ताकरसर्व्वसार्व्ववचनव्यालेखनाभ्युद्यतः । शांतिः पुस्तकमेतदर्थमनघ व्यालेखयामास सः ॥ १४ ॥

## ७००८ श्री जैनानंद पुस्तकालय. सुरत.

श्रीकालिकाचार्यकथा. ता. प्र. ३

इतिश्री कालिकाचार्य कथानकं समाप्तं ॥ शुभं भवतु श्री श्रमणसंघस्य ॥ श्री पूर्णिमापक्षीय-भट्टारकश्रीपुण्यतिलकसूरिचरणकमलध्यानैकमनसां श्रीयतिशेखरसूरीणां ॥ श्रीः ॥

## ४६८७ श्री उजम फोइ जैन धर्मशाळा. अमदावाद.

श्रीशतकटिप्पनकं. ता. प्र. ४

इति शिताम्बरश्रीमुनिचंद्रसूरिविरचितं शतकटिप्पकनं समाप्तं ॥ प्रत्यक्षरं निरूप्यास्य, ग्रंथमानं विनिश्चितं । शतानि नव पंचाशदधिका पंचभिस्तथा ॥ ग्रंथाग्रं ९५५ ॥ यदक्षरं परिभ्रष्टं मात्राहीनं च यद्भवेत् । क्षंतव्यं तद् बुधैः सर्व्वं कस्य न स्खलते मनः ॥ ११ ॥ संवत् १३३४ वर्षे द्वि फागुण वदि ११ शनावद्येह श्रीमत्पत्तने महाराजश्रीसारंगदेवराज्ये श्रीसंघेन शत-कटिप्पनकं लिखापितं । ठ० लापणेन लिखितं ॥

## ४६९१ श्री. उ. फो. जै. ध. अमदावाद.

श्रीपर्युपणकल्प. ता. प्र. ५

वंशे नागरसंज्ञे वाहडनामा बभूव सुश्रेष्ठी । सद्धर्मकर्मनिरतो विरतोऽपरदूषणग्रहणात् ॥ १ ॥
आनंदो नंदनस्तस्य । सद्धार्मिकशिरोमणिः ॥ येन पिल्लाहिका ग्रामे जैनमंदिरमुद्धृतं ॥ २ ॥
पत्नी ह्यनुपमा तस्य, संजज्ञे गुणधारिणी । सद्धर्मवासितस्वांता, कान्ता स्वजनसंततौ ॥ ३ ॥
तयोः पुत्रत्रयं जज्ञे, जिनधर्म्मपरायणं । आद्यो धांधा द्वितीयस्तु, सुश्रेष्ठी रत्नसंज्ञकः ॥ ४ ॥
तृतीयश्च जगत्सिंहो, न्यायवान् गुरुपूजकः । तत्र पूर्व्वः सुतस्तस्य, श्रेयोऽर्थं शुद्धभावतः ॥ ५ ॥
सार्वज्ञशुद्धसिद्धांतलेखनोद्यतवद्धधीः । श्रीपर्युपणकल्पस्य लेखयामास पुस्तिकां ॥ ६ ॥

## ४६८१ श्री. उ. फो. जै. ध. अमदावाद.

श्रीपर्युपणकल्प. ता. प्र. ६

पर्युपणा ग्रंथाग्रं १२१६ संवत ९२७ वर्षे आषाढ सुदि ११ बुधे.

## ४६९२ श्री. उ. फो. जै. ध. अमदावाद.

श्रीकल्पसूत्र. ता. प्र. ७

संवत १४२१ वर्षे विशाख सुदि पंचमी दिने श्रीमदणहिल्लपत्तने श्रीकल्पपुस्तिका पं. महिपाकेन लिखिता ।

## ४६९३ श्री. उ. फो. जै. ध. अमदावाद.

श्रीकल्पसिद्धांत. ता. प्र. ८

वंशः प्राग्वाटनामोदयगिरिरसकौ तत्र भास्वानवीनः,
संजातो धांधसंज्ञः स्वजनजन मनःपंकजानां प्रकाशी ।

ध्वस्तध्वांतप्रचारो गुरुगुरुचरणव्यानरोचिःसमूहैः,
कुर्वन्निःशेषदोषाकरकरनिकरच्छेदमुच्चैर्विशेषात् ॥ १ ॥
धांधाभार्यादेल्हणदेवीपुत्रौ समग्रगुणनिलयौ ।
अर्जुन–झडसिलसंज्ञौ धन्यौ विज्ञौ च तौ जगति ॥ २ ॥
यशसार्जुनो ऽर्जुन इति प्रथितोऽर्जुनवर्ज्जनात् विकाशकरः ।
परमात्मतत्वरचनासु चिरं चतुरस्य यस्य चरति मनः ॥ ३ ॥
परीक्षिवंशोद्धरणप्रवीणो, जयी चिरं स्तात् स्वजनावतंसः ।
सुश्रावकश्रेणिषु दानदेवपूजादिभिर्मुख्यतमो ऽर्जुनोऽयं ॥ ४ ॥
सौजन्यशीला सहजल्लदेवी, प्रिया प्रियालापपरार्जुनस्य ।
आस्ते गृहे स्वस्तिमती मतीनां, गृहं गृहद्वारगतेव लक्ष्मीः ॥ ५ ॥
अर्जुनस्य तनयाः षडमी ते, यान् निरूप्य विबुधाः कथयंति ।
षण्मुखः किमु मुखं प्रति देहत्वं चकार सुभगं पृथक् पृथक् ॥ ६ ॥
मुंजालदेवः प्रथमः प्रतीतो, धियां निधिर्धिधवरो द्वितीयः ।
गुणाकरोऽसौ गुणपल्लसंज्ञो धनाभिधो धन्यतमो जनेषु ॥ ७ ॥
कामार्थाविव तौ मूर्त्तौ, सांगागांगाभिधौ सुतौ ।
अर्जुनस्य प्रियालापपरौ (वर्जित) वामनौ ॥ ८ ॥
श्रीपूर्णिमापक्षपयःपयोधौ, बभूव चंद्रो गुणचंद्रसूरिः ।
संप्रीणयद् भव्यचकोरपूगं, ज्योत्स्नानिभैर्यो वचसां समूहैः ॥ ९ ॥
पट्टे तदीये प्रवभूव भूरिसूरीश्वरस्थापनकृद् गणेशः ।
गुणप्रभाख्यो गुणरत्नराशिरत्नाकरः कल्मषवर्ज्जितांगः ॥ १० ॥
श्रीगुणप्रभगुरुर्गुरुतायाः, भाजनं जनमनोऽब्धिशशांकः ।
आत्मकार्यविमुखः परकार्ये, प्राणदानरसिकः स बभूव ॥ ११ ॥
तत्पट्टपद्मकमलाहृदयैकहारः, सारः श्रुतेन गुणवान् गुणभद्रसूरिः ।
सिद्धांतसागरविगाहनमंदराद्रिर्भव्यांबुजप्रकरबोधनबालसूरः ॥ १२ ॥
श्रीगुणभद्रसूरीणां, स्फूर्तिमान् गुरुबांधवः ।
मतिप्रभः प्रभाजालभासितावनिमंडलः ॥ १३ ॥
तस्य श्रीकल्पसिद्धांतपुस्तकं स्वस्तिकारकं ।
सांगागांगातनूजाभ्यां, लेखयित्वाऽर्पितं नवं ॥ १४ ॥
कुलादि पक्ष वेदेन्दु, संख्यया (१४२७) समयेगते ।
श्रीविक्रममहीपालात्, मासे माधवसंज्ञके ॥ १५ ॥

## ७००१ श्री. शांतिनाथजी ज्ञान भंडार. खंभात.

श्रीअध्यात्मोपनिषद्. ( योगशास्त्रस्वोपज्ञवृत्तिः ) ता. प्र. ९

इति परमार्हतश्रीकुमारपालभूपालशुश्रूषिते आचार्यश्रीहेमचंद्रविरचिते अध्यात्मोपनिषन्नाम्नि संजातपट्टबंधे श्रीयोगशास्त्रे स्वोपज्ञद्वितीयप्रकाशविवरणं ॥ ग्रंथाग्रं ३१०० ॥ मंगलं महाश्रीः ॥ भद्रं ॥

आसीच्चंद्रकुलांबरैकतरणिः श्रीमानदेवाभिधस्तद्वंशे
प्रभुमानतुंगगणभृत् प्राज्यप्रभावः प्रभुः ।
तत्राजायत बुद्धिसागरगुरुः प्रद्युम्नसूरिस्ततस्तच्छिष्योऽजनि
देवचंद्रगणभृद्गच्छाग्रणीर्विश्रुतः ॥ १ ॥

श्रीदेवचंद्रस्य मुनीश्वरस्य, जातौ सुशिष्यौ जगति प्रशस्यौ ।
श्रीमानदेवः प्रथमो गणेशः, श्रीपूर्णचंद्रो गणभृत्तथाऽन्यः ॥ २ ॥

यः सैद्धांतिकमौलिभूषणमणिर्विद्वज्जनाग्रेसरः,
संतोषोच्चमरत्नराजिततनुः श्रीमानदेवप्रभुः ।
यच्चेतः कल्यापि नो विलिखितं संलापलीलावतीये-
च्छल्लोचनचारुक्षितशरश्रेणिभिरात्मोद्भवः (वै) ॥ ३ ॥

श्रीपूर्णचंद्रसूरीणां, वादि गोवृंदनाशिनी ।
मल्लनिभ्नापि साऽभ्याद्रौ, याऽभूत परमं वृषं ॥ ४ ॥

श्रीमानदेवसूरेः पट्टेऽजनि मानतुंगसूरि गुरुः ।
विधिरिव भवांतकारी, नरकद्वेषी स विष्णुरिव ॥ ५ ॥

अन्यच्च—

धर्कटवंशसुधानिधिचंद्रः, श्रेष्ठी गणियाको निस्तंद्रः ।
तस्य गुणश्रीः समजनि जाया, दक्षसुतेव सदैव विमाया ॥ ६ ॥

तस्यांगजैका सुमहत्तरायाः, प्रभावतीसंज्ञमहत्तरायाः ।
पार्श्वेऽग्रहीत् पंच महाव्रतानि, प्रद्युम्नसूरेः सुगुरोः करेण ॥ ७ ॥

जगतश्रीरुदयश्रीः श्रीचारित्रश्रीमहत्तगः । क्रमेण तासां सर्वासां, पादपद्मधुव्रताः ॥ ८ ॥

श्रा निर्मलमतिर्गणिनीरम्यां श्रीयोगशास्त्रसद्वृत्तेः । द्वैतप्रकाशखंडस्य पुस्तिकां लेखयामास ॥ ९ ॥

श्रीमानतुंगसूरेः पट्टस्थितपद्मदेवसूरीणां । तां प्रवचनरम्यपात्रं प्रददौ पुण्याय पुण्यतरां ॥१०॥

कन्यागारिनृपो भगाधरसुता जाया कुल्मंत्रिणो वृद्धा वृद्धनगा जनास्तदपरेऽपेक्षावसागकगः ॥

चंद्रादित्यचरोपदानिभगाः मान्यमेनत् क्षितौ । यावत्तिष्ठति तावदेव विबुधैर्वाच्या सदा पुस्तिका ॥

संवत १२९२ वर्षे कार्तिक शुदि ८ रवौ धनिष्टानक्षत्रे । योगशास्त्रवृत्तिर्द्वितीय प्रकाशस्य लिखितेति ॥ शुभं भवतु ॥

## ४६८३ श्री. उ. फो. जै ध. अमदावाद.

श्री दशवैकालिकसूत्रम् ता. प्र. १०

संवत् १२६५ वर्षे ज्येष्ठशुदि ५ रवौ ॥ मंगलं महाश्रीः ॥ द्विगुणत्रप्रवास्तव्यश्रीमालवंशीयआशा भ्रातृ व्यव० चेला पौत्रेण व्यव० यउला भ्रातृ धांधापुत्रेण देवकुमारेण निजमातु धनदेवीनामिकायाः श्रेयोनिमित्तं लेखयित्वा दशवैकालिकपुस्तिका निजभगिन्यैजगसुंदरगणिन्यै पठनार्थं प्रदत्तेति ॥

## ७००३ श्री जैनविद्याशाळा. अमदावाद.

श्रीसूर्यप्रज्ञप्तिवृत्ति ता. प्र. ११

इति श्रीमलयगिरिविरचितायां सूर्यप्रज्ञप्तिटीकायां विंशतितमं प्राभृतं समाप्तं ॥
श्रीमज्जिनेश्वरविहारविराजमानं सद्धर्म्मकर्म्मठजनव्रजलभ्यमानं ।
सौवश्रिया प्रतिहतान्यपुराभिमानं ख्यातं पह्लादनगरं जयति प्रधानं ॥ १ ॥
तत्रौन्नत्यविशेष शालिनि गिरिप्राप्तप्रतिष्ठे शुभेच्छाये पर्वशतप्रशस्तविभवे प्राग्वाटवंशे ध्रुवं ।
लापाह्वः प्रबभूव मौक्तिकमणिः सद्वृत्तभावं श्रितः,
श्रीमान् सज्जनमंडनं शुचिरुचिस्त्रासादिदोषोज्झितः ॥ २ ॥
तमो विजेतुं पुरुषोत्तमस्य, सुदर्शन श्रीकलितस्य तस्य ।
पद्मासनाभोगविलासदक्षा, प्रिया गुणाढ्याऽजनि लक्ष्मिदेवी ॥ ३ ॥
तत्तन्निर्म्मलधर्म्मकर्म्मनिरतो धर्माभिधानस्तयोः । संजातस्तनयः प्रशस्यविनयः श्रीमान्निरस्ताऽनयः ।
आश्चर्यं प्रतिपद्यपि प्रतिकलं साकल्यनिर्मल्यभाक् । यस्य स्पष्टमदीप्यतामृतरुचिर्निःशेषनश्यत्तमाः ॥४॥
षष्ठाष्टमादिकविचित्रतपोविधानव्यावर्णनाऽस्य ननु पुष्यति कामभिल्यां ।
संसारसागरतरण्ड्मखंडभावः । संसारतारणशतं कृतवान् कृती यः ॥ ५ ॥
श्रीमान् वयस्थो दयितान्वितोऽपि च, ब्रह्मव्रतं वत्सरपंचविशतिं ।
स एपयावत्कथिकं प्रपालयन्न विस्मयं कस्यमनस्यवीविशत् ॥ ६ ॥
श्रीशक्रस्तवपंचकादिविधिना वारांश्चतुर्विंशतिं तन्वानो जिनवंदनं प्रतिदिनं यावद्भवाभिग्रहात् ।
सम्यक्त्वस्य सुधीः शतत्रयमितैर्यो राजतैष्टंककै रंतर्मोदकमाहितैर्विहितवानुद्यापनं पुण्यवान् ॥ ७ ॥
इमं सतीचक्रशतक्रतू रतूरतूतूषन्निस्तुपशीलभृत्प्रिया ।
गुणा यदीया हृदयंगमाः सतां, श्रयंत्यजस्रं श्रवणावतंसतां ॥ ८ ॥

इतश्च—

श्रीमत्तपागणनभोंगणभास्कराणां सिद्धान्तवारिधिविगाहनमंदराणां ।
श्रीदेवसुंदरगुरूत्तमपट्टभाजां, सोमसुंदरमुनीश्वरसूरिराजां ॥ ९ ॥

पियूषदेश्यामुपदेशभारतीं, निशम्य सम्यक्श्रुतभक्तिभावितः ।
ग्रंथं सहृदयमानमात्मनः, पुण्याय धन्यः स्वधनेन लेखयन् ॥ १० ॥
सोमवसुमनु (१४८१) मितेऽब्दे श्रीचित्कोशे व्यलीलिखत् योऽदात्॥
यावद् व्योमा........सहृदयानंद कंदांबुदः ॥ शुभं भवतु ॥

## ५२१८ श्री. शांतिनाथजी ज्ञान भंडार. खंभात.

श्रीपंचमस्थानव्याख्या. ता. प्र. १२

श्रीलक्ष्मीतिलको मुदेऽस्तु भगवान् श्रीन्यायतुर्याभिमाध्याये
भूमिगृहे स्थितानपि रहस्यार्थान् ममाद्योतयन् ।
श्रेयःस्नेहवराश्रयो न च मनाक्कंप्योऽपि दुर्वादिवाग्या-
तैरव्ययसदृशःखलु नवो यद्गीःप्रदीपोदयः ॥ १ ॥

प्राक् संहृत्य सुरासुरेण जलधिं व्यालोड्य हेमाद्रिणोद्भूतं सारमुपाददे स्वयमहो एकांगमल्लस्तु यः ।
न्यायांभोधिममुं विगाह्य परितो बुद्ध्या कुशाग्रीयया, सामास्त्येन महार्थसारमचिराज्ज्ञात्वा व्यतारीन्मम २
तस्य श्रीजिनरत्नसूरिचरणांभोजांतिकेऽधीतिनः श्रीलक्ष्मीतिलकाभिषेकनृपतेर्नानार्थरत्नैरलम् ।
कुर्वाणात्र सुवर्णदंडरुचिरा दुर्गार्थवृत्ते र्ध्वजादेतस्या मयकोच्छ्रितोज्ज्वलयशः श्रीवैजयंत्युच्चकैः ॥ ३ ॥

इति युगप्रधानश्रीजिनेश्वरसूरिशिष्यलेशश्रीअभयतिलकोपाध्यायनिर्मितायां पंचमस्थान-न्यायमहातर्कविषमपदव्याख्यायां पंचमाध्ययः समर्थितः ॥ नमोऽस्तु श्रीपार्श्वनाथाय ॥ नमः श्रीजिनदत्तसूरिचरणकमलेभ्यः ॥ सर्वदा सुप्रसादास्तु श्रीशारदा महादेवी ॥

चान्द्रेकुलेऽजनि जिनेश्वरसूरिरिन्दुर्हत्वा तमो वसतिमार्गविकाशकारी ।
भेजे ततोऽभयगुरुश्च नवांगटीकापीयूषकुंडनवकोद्धरणः श्रुताब्धेः ॥ १ ॥
जज्ञे तदीयपदवीनलिनीमरालः स्थेयश्चरित्ररमया जिनवल्लभाख्यः ।
आसीत्पदेऽस्य जिनदत्तगुरुर्भटेन, येनादधे विधिपथःसुवहः शिलोऽपि ॥ २ ॥
आसीत्पदेऽस्य जिनचंद्रगुरुश्च पंचविंशो जिनो य इह सर्वजनेन गीतः ।
तस्मादुदैज्जिनपतिर्यतिराट् जयश्रीगाढोपगूढपरिलायदमन्दमोदः ॥ ३ ॥

शिष्या स्तस्य जिनेश्वरो (?) सद्गुतसम्राजो जयंत्यंजसा मुन्यस्तैव सरस्वतीपरिवहोस्थैर्न्यायपंटाय्वनः ।
स्मर्पोत्सवसंर्द्धनिर्जिनगृहेषु स्वर्गकुंभच्छलात्, पृथ्वी हेम फलैः फलति भुवनं यत्कोदये मोदते ॥ ४ ॥
विद्यालक्ष्मिक्रियाभिस्त्रिजगदधिपुवा सुप्रमाणैव तेषां,
हि नयमहातर्कसत्केन टीका प्रोढाहिताऽस्मायपि साकं ।
पुंगार्गेशांतजाता यत्र यत्र मयका निर्द्धनेनापि बुद्ध्या,
तस्याभिप्रायशुद्धिर्भवतु महचरी याव(दिन्दु)र्कयोभी ॥ ५ ॥

**श्रीमल्ललक्ष्मीतिलको**पाध्यायैः, शोधितेयमतिनिपुणं । अन्यदपि यच्च शोध्यं तदत्र शोध्यं महाकुशलैः ॥

**ओकेशवंश** एव हि जयतादिह कल्पपादपैः पूर्णः ।
कलिकालेऽपि सदा यः सर्वेषां पूरयत्याशाः ॥ १ ॥
प्रगुणगुणमयोऽत्र पार्श्वनामा ध्वजकमलां कलयांचकार साधुः ।
स्म जयति मृगं मृगांकगं यो मधुरयशःकलकिंकिणीप्रगानैः ॥ २ ॥
चत्वारो **मानदेवः कुलधर बहुदेवोयशोवर्द्धनो**ऽस्य,
श्रीभर्तुर्बाहुभूता अजनिषत सुता धर्म्मकर्म्मप्रवीणाः ।
सत्पुत्रा मानदेवाद् य इह**धनदेव**स्तथा **राजदेवो**
**निंबार्क**श्चाविरासन् हिमगिरित इव स्वर्गसिंधुप्रवाहाः ॥ ३ ॥
**देवधरलोहदेवौ,** जातौ कुलधरांगजौ । यकाभ्यां कुंडलाभाभ्यां, पुण्यश्रीः समभूष्यत ॥ ४ ॥
विभ्रेजे (ध?) **निचंद्रमा जिनपतिः** पुत्रो यशोवर्द्धनक्षीराब्धेर्जिनचंद्रविष्णुपदमाक्रांतं नितांतं महत् ।
बालेनापि हि येन साधुषु बहुज्योतिष्षु राज्यं दधे[ऽधे]
शेषानां शिरसि स्थितं पितृकुलं विश्वंच संप्रीणितं ॥ ५ ॥
संजज्ञे **बहुदेवसाधुनृपतेः पद्माकरस्यांगभूः,**
पद्माभो गुरुदेवपादकमलार्चाऽभिः कृतार्थं जनुः ।
कुर्वाणो **जयदेवसाधुरमलो लक्ष्माख्यधुर्यप्रिया**व्याजेन
ध्रुवमन्वहं तमभजल्लक्ष्मीः स्वयं देवता ॥ ६ ॥
**लक्षिका** चापरा वल्लभा शोभते पंचपरमेष्ठिपदहेमपंचेष्टकैः ।
आरभत्यत्र यस्या रसज्ञा सदा **लाहिनी** चापि पुत्री रसज्ञा मुदा ॥ ७ ॥
**लक्ष्म्यां** वृषोर्व्यां **जयदेवसा**धुरजीजनच्चाक्षतबोधिबीजः ।
पुरःप्रकांडौ **वरदेव–धांधौ,** शाखाकुलाधारकरौ सुसाधू ॥ ८ ॥
तत्राद्योऽजनि धार्मिको मतिमतां सीमा यतिप्रेक्षिणां
दीक्षादानगुरुर्मदोदयदवोलक्ष्म्या प्रियो नंदनः ।
**श्रीजावालिपुरे**ऽत्र देवगृहिकां **पार्श्वस्य वीरेशितु**श्चैत्ये
यः समसूत्रयन्नि जयशःश्रीकेलिशैलोपमां ॥ ९ ॥
देवार्चा निपुणा च पंचपरमेष्ठिध्यानदानक्षमा, ह्रनैर्मल्यपरोपकारमधुरालापादिकैः सद्गुणैः ।
यं लोकोत्तरमारचय्य नराऽमान्यं व्यलोलुप्यत श्रद्धा कार्तयुगेषु पुंसु विधिना **धान्धो** द्वितीयस्त्वसौ ॥
आद्यासीद्वरदेवसाध्वधिपतेः **प्रल्हादनस्यांगजाः** ।
जाया **चाहिनिका** निकाममधुरालापा सुधायाः प्रपा ।
सैषाऽसूत [सुती] सुतं **विमलचंद्रं** विश्वचंद्रोदयं,
**साउरुयड** नामिके च तनये श्रेयःश्रियः शेवधीः ॥ ११ ॥

हर्षाच्चंद्रो विमलो जिनेश्वरगुरोः पार्श्वे सुवर्णैर्धनैः
' वर्षन्नृत्यति रत्नवृष्टिरिनयां प्राजयंन्नुत्सवैः ।
श्रीप्रल्हादन पत्तने जिनपतिं शांतिं प्रतिष्टापयन्,
विष्ण्वादीन् पुरुषोत्तमान् किल दशामथापि चक्रेऽतिथीन् ॥ १२ ॥
श्राद्धाः सन्ति महर्द्धिका निजगुरोर्भक्तानुभक्ता धना
स्तत्कोर्किप्रविधायिनोऽ प्यथ सदा तत्पर्युपास्त्यादृताः ।
स्वप्राणानधिरोपयन्निजगुरोः कार्ये तुलायां तु योऽ-
थैकोऽयं विमलेंदुरेव स इति प्रोत्क्षिप्य बाहू ब्रुवे ॥ १३ ॥
प्रिया द्वितीयाऽस्य राजूर्दानशीलतपोगुणाः ।
यदंगजाः प्रणंदंति भावनाः स्वन्नुराशिपा ॥ १४ ॥
षट् पुत्रा गुणचंद्रको भुवनचंद्रो हेमचंद्र स्तथा. .... .... .... .... .... अपूर्ण.

## ७८८२ श्री जैनज्ञान शाळा. वीजापुर.

**श्रीसूक्ष्मार्थविचारसारप्रकरणचूर्णिः** ता. प्र. ११

इति श्रीमुनिचंद्रविरचिता सूक्ष्मार्थविचारसारप्रकरणचूर्णिः समाप्तेति ॥ ग्रंथाग्रं २८७३ ॥
संवत १४९८ वर्षे फागुण वदि १४ रवौ मह सांगा लिखितं ॥ श्री ॥
आकरो नररत्नानां, कीर्तिकल्लोलिनीपतिः । श्रीमान्केशवंशोऽस्ति, रत्नाकर इवापरः ॥ १ ॥
श्रेष्ठी तस्मिन्नुदेति स्म, प्रतिष्टावल्लिमंडपः भादाभिधानः श्रद्धानां, धौरणीषु धुरंधरः ॥ २ ॥
सचिवेंद्रस्य तस्यासीत्, सहजूः सहचारिणी । गंगातरंगा यच्छीलमंगीमंगीकरोति चेत् ॥ ३ ॥
तयोस्त्रयस्त्रपोपेतधियोऽमी तनयोत्तमाः । धना भीमाभिधौ डांटाकश्चेति प्रगटप्रभाः ॥ ४ ॥
सधर्मचारिणी तेषु, धनसाधोरजायत । मारुसा रूपकलया रंभासारूप्यधारिणी ॥ ५ ॥
शुक्तिर्मुक्ताचयमिव, द्यौरिव ग्रहमंडलं । रत्नगर्भेव रत्नौघं, सा प्रासूत सुतद्वयं ॥ ६ ॥
मेघाभिधानः प्रथमः प्रथितपुण्यक्रियासाधनसावधानः ।
ववर्ष यो मेघ इवाखिलेषु क्षेत्रेष्वमात्रद्रविणांबुपूरैः ॥ ७ ॥
द्वितीयोऽद्वितीयः श्रीसदाकः सदनं धियां । तपसि ब्रह्मचर्ये च, तुल्यो यस्यास्तु कोऽधुना ? ॥८॥
कमला केशवस्येव, शिवस्येव शिवाऽथवा । मेघाकस्य प्रियतमा, भोली नामाऽऽदिमाऽभवत् ॥९॥
तत्पुत्रोऽजनि माणिक्यध्वा(णा)क्य इव बुद्धिमान् । कमलाई द्वितीयास्ति, हीरो वीरश्च तत्सुतौ॥१०॥
व्यवहारिहारिहारिणि, निवसन् श्रीस्तंभतीर्थवरनगरे । प्रथमाऽभिधेयतामयमवाप मेघाभिधः कृतिनां ॥
श्रीपावकाचलशृङ्गारश्रीसंभवजिनालये । तेनाष्टौ देवकुलिकाः, कलिकालहृताः कृताः ॥ १२ ॥
संसारपारदस्य श्रीसोपारकपुरेशितुः । सोऽपारद्रविणैर्जीर्णचैत्यं चक्रे पुनर्नवं ॥ १३ ॥
चतुर्विंशतितीर्थेशप्रतिमा मतिमानसौ, दृष्टमात्रकृतोद्वेगविरमा निरमापयत् ॥ १४ ॥
स्पर्द्धयाऽह्वयमानेव ज्योत्स्ना यौज्ज्वल्यशालिनी । सुरत्राणपुरे शाला, विशाला तेन निर्ममे ॥१५॥

चतुर्विंशतिवारांश्च, माहिन्द्रितटिनीतटे । अकारयदमारिं यः सर्वा मारिं न्यवारयत् ॥ १६ ॥
अमात्रास्तीर्थयात्राश्चाऽनवाः श्रीसंघभक्तयः । यास्तेन तेनिरे कस्तद्व्यक्तिं वक्तुमलं भवेत् ॥ १७ ॥
श्रीमत्तपागणनभोङ्गणभास्कराणां श्रीसोमसुंदरयुगोत्तमसूरिराजां ।
सम्यग् निशम्य श्रुतभक्त्युपदेशमेवमुल्लासितः प्रमदमेदुरितादरेण ॥ १८ ॥
श्रीसिद्धांतादिकग्रंथलक्षं लेखयताऽमुना । तेन श्रीमेघनादेन, लेखितः पुस्तकोऽप्यसौ ॥ १९ ॥
चित्कोशस्थानके सोऽयं रोपितः कृतिनाऽमुना फलतात् ज्ञानकल्पद्रुर्विरत्यादिफलोदयैः ॥ २० ॥
अर्केन्दुमंडले यावद् व्योमश्रीकर्णकुण्डले । राजतस्तावदेषाऽस्तु पुस्तिका स्वस्तिशालिनी ॥ २१ ॥
इति प्रशस्तिः ॥

## ८०८६ श्री शांतिनाथजी ज्ञान भंडार. खंभात.

**श्रीउत्तराध्ययनटीका.** ता. प्र. १४

सं. १३०८ वर्षे ज्येष्ठ वदि ७ बुधे । नमो जिनागमाय ॥
प्रशस्यधर्मप्रभवः सुपर्वा, विशाल शाखो वरपत्रशोभः ।
महीभृतां मौलिषु माननीयः, श्रीधर्कटानां प्रथितोऽस्ति वंशः ॥ १ ॥
साढाकनामा सुविशुद्धमव्यक्षासादिदोषैः परिवर्जितश्च ।
अजायतास्मिन् कुमुदावदातो, मुक्तामणिर्भास्वरकांतिदीप्रः ॥ २ ॥
समुद्र इव गंभीरः, शशांक इव शीतलः । दानवर्षी गजइव, साढाकः श्रावकोऽभवत् ॥ ३ ॥
साढाकस्य सुताः पंच, जज्ञिरे पांडवा इव । येऽर्थि संघातजातानां कौरवाणां क्षयं व्यधुः ॥ ४ ॥
सर्वेऽपि धर्मरसिकाः, सर्वेऽपि हितभाषिणः । पुमर्थसाधनपराः, सर्वे जनहितैषिणः ॥ ५ ॥
आद्य आशाधरस्तेषां, प्रमुखो गुणशालिनां । महीधरो द्वितीयस्तु, गुणग्रामैकमंदिरं ॥ ६ ॥
वोल्हाकनामा समभूत्तृतीयो हारवद् गुणी । शशांककाशसंकाशयशःपूरितभूतलः ॥ ७ ॥
यशोवीरश्चतुर्थोऽभूद्दानेश्वरशिरोमणिः । लोकोत्तरचरित्रोऽभूत्पंचमः पाजडस्तथा ॥ ८ ॥
महीधरस्य संजज्ञे, संजातोज्ज्वलपुत्रका । गेहिनी देहिनीव श्रीर्महाश्रीरिति संज्ञिता ॥ ९ ॥
केल्हणो नाम संजज्ञे, तनयः सनयस्तयोः । सद्गुरुचरणद्वंद्वसमाराधनतत्परः ॥ १० ॥
अजायत प्रिया तस्य कमलश्रीर्महाशया । सत्यापितसुभद्रादिसतीलोका गुणैर्निजैः ॥ ११ ॥
सागरा इव लावण्यकलिताश्चतुराशयाः । अजायत सुधर्मिष्ठाश्चत्वारस्तनयास्तयोः ॥ १२ ॥

चंदनादपि मनोज्ञवागभूदाद्य एष कटुकस्ततः पुनः ।
रासलः सहजधर्मकर्मठो येसलस्तु गुणराशिपेशलः ॥ १३ ॥
गांगकस्तदनु गांगवारिणा, संनिभः शुचितया विचक्षणः ।
देवपूजनरतो निरंतरं, वासनारसनिवासमानसः ॥ १४ ॥

वल्लभास्तदनु जज्ञिरे क्रमात्, शीलभूषणविभूषितांगकाः ।
भर्तृपादपद्मैकदृष्टयो मूर्तिभाज इव संगताः श्रियः ॥ १५ ॥

पत्न्योऽभूवन् कुलोत्पन्नाः, निःसपत्नाःप्रियंवदाः पद्मश्रीश्चेति राज्यश्रीर्लक्ष्मीः श्रीरिति संज्ञिताः ॥१६॥
पद्मश्रियास्त्रयः पुत्राः, संजाताः शुद्धबुद्धयः । प्रवाहा इव गंगाया, जगतीपावनक्षमाः ॥ १७ ॥
प्रथमो **मोहनस्तेषां**, जनमानसमोहनः । द्वितीयो **विजयपालो**, बालोऽपि हि महामतिः ॥१८॥
तृतीयो **लिंबदेवाख्यो** मातुरत्यंतवल्लभः । सहकारसमाकारो, निवासः संपदामिव ॥ १९ ॥
**आल्हुका** च सुता जाता, बाल्यादपि महासती । तपःकर्मणि सर्वस्मिन्निरता विरता भवात् ॥२०॥
द्वितीया **महणू** नाम, संजाता तनया तथा । **राज्यश्रियाः** सुता जाता, **वउल्लू**नाम विश्रुता ॥ २१ ॥
**श्रियां** च तनया जाता, **गोसली** नाम रुपभाक् । प्रवर्द्धमाना चंद्रस्य, कलेव विमलाकृतिः ॥२२॥
तथा-**यशोवीरस्य** संताने, सुतो **नरपतिस्तथा** । **शिरपालश्च** संजातः, **शांतिगरस्तत्सुतोऽभवत्** ॥२३॥
**पाजडस्य** प्रिया जज्ञे, **जयश्रीर्नाम** विश्रुता । तया सुतद्वयं जातं, **छाडा आसलनामकं** ॥ २४ ॥
**छाडाकस्य** प्रिया जज्ञे, **लीलीरिति** विशालवाक् । **आसलस्य** तथा जाता जाया **आसमतिः** शुभा ॥२५

....सरलाशया । इत्यमेवमादि सकलं, साढाकस्य कुटुंबकं ॥ २७ ॥ इतश्च—
श्रीमान् सत्वगृहं गभीरिमनिधिर्निशेषभूभूषणैर्व्याकीर्ण्णः शुचिसाधुरत्ननिकरैः पाठीनपीठान्वितः ।
संसेव्यः सुमनोभिरक्षयगुणः ज्ञानामृतोत्कंठितै नै....(धात्चन्द्रगण).... ॥ १ ॥

अद्भुतयशोवादिसूरि स्ततश्चा**सूरिःश्रीसर्वदेवस्तदनु** समभवद्वादिवृंदैक वंद्यः,
श्रीमान् **प्रद्युम्नसूरिः** सकलकलिमलक्षालने वारिपूरः ॥ २ ॥

इत्येवमादिप्रमुखेषु सूरिवर्येषु गच्छमु कथावशेषं । **भद्रेश्वरसूरिरजायतास्मिन्**........भवत् ॥ ३ ॥
अक्लेशेन बभार मारविजयी श्रामण्यभारं पृथगूभागीकृत्य सुदुर्वहं स्ववपुषा सैकादशांगेन यः ॥ ४ ॥
**श्रीसिद्धसेनसूरिस्तत्पट्टविशेषको** जयति यस्य । कलिकोपमान सहिता दशनावलिरेव न तपःश्रीः ॥५॥
.... ....विद्प्रतिबोधहेतुः । ततो विवस्वानिव **मानदेवः** सूरिर्यशःपूरितदिग्वितानः ॥ ६ ॥
ततोऽभूच्चारुचारित्रचर्यामर्या दयांबुधिः । **श्रीमद्रत्नप्रभाचार्यो** धुर्यो माधुर्यशालिनां ॥ ७ ॥
तत्पादांभोजभृंगः प्रवरगुणयुतः सर्वसिद्धांत वे( त्ता )........हृतवपुः शर्करामिष्टवाक्यः ।
न्यासः श्रेयः शिवश्री दिशतु भुवि सदा **सूरिदेवप्रभोऽयं** ॥ ९ ॥

व्याख्यास्यतस्तस्य गुरोर्मुखाब्जात्, जैनागमं संसदि साधुवृत्तः ।
कुटुंबयुक्तः **कटुको** महात्मा, शुश्राव सिद्धांतरहस्यमेतत् ॥ १० ॥

चक्रे मुक्ति....त्रैलोक्यलक्ष्मीरपि स्वायत्ता विदधे च दुर्गतिगतिस्तेनैव रुद्धात्मनः ।
येन स्वं भुजपंजरार्जित मिदं वित्तं गुरोराज्ञया, सिद्धांताद्भुतपुस्तकस्य लिखने साफल्यमारोपितं ॥११॥
इत्याकर्ण्य वचः सुधाकवचितं वक्त्रांबुजात् सद्गुरोः साधुः साधितमुक्तिमार्गमतिकः सद्भावनाभावितः ।

वर्षे सिद्धिवियत्कृशानुविधुमिसंख्या:(१३०८)कृते श्रेयसे,

पित्रोः सुंदरमुत्तराध्ययनकं ग्रंथं मुदाऽलीलिखत् ॥ १२ ॥

न केवलं पुस्तकमेकमेव, विलेखया मास....धूप धाटि नालिकेर·कलितं चंद्र प्रभावे द्रगं ॥

यावन् मेरुकरे गभस्तिकटके स्वस्तेऽथ पिन्यांगना ॥ तावन्नंदतु पुस्तकः सुगुरुभिर्व्याख्यायमानो बुधैः ॥

॥ मंगलमस्तु ॥ प्रशस्तिरियं कृता लिखिता च श्रीरत्नाकरसूरिणा ॥

## ८०८४ श्री शांतिनाथजी ज्ञान भंडार. खंभात.

**श्रीरत्नचूडकथा,** ता प्र. १५

पूजादिविधानफलं समाप्तं ॥ रत्नचूडकथा ॥ संवत १२२१ ज्येष्ट सुदि ९ शुक्र दिने अद्येह श्रीमदणहिलपाटके महाराजाधिराजजिनशासनप्रभावकपरमश्रावकश्रीकुमारपालदेवराज्ये श्रीचड्डापल्यां च श्रीकुमारपालदेवधारवर्षनरेंद्रराज्ये श्रीचक्रेश्वरसूरि-श्रीपरमानंदसूरिप्रमुखउपदेशेन श्रीचड्डापल्लिपुरीवास्तव्य श्रे० पूना श्रावकेण आशाचंद्र–आशारपोइणि-छाहिणि-राजू-प्रमुखमानुषसमेतेन इदं ज्ञाताधर्मकथा–रत्नचूड कथापुस्तकं लिखितमिति.

शिवमस्तु सर्व्व जगतः परहितनिरता भवन्तु भूतगणाः ।

दोषाः प्रयांतु नाशं सर्व्वत्र सुखीभवतु लोकः ।

**श्रीपरमानंदसूरिश्रीयशःप्रभसूरीणां ॥**

## ८०९० श्री शांतिनाथजी ज्ञान भंडार. खंभात.

**श्रीउपसितिकथा.** ता. प्र. १६

**श्रीमालाचलमौलिमूलमिलितत्रैलोक्यसुश्लाघितः**, पर्व्वालिःकलितः सुवर्णनिलयः आसाद लब्धालयः ।

लीनालीभ्यकुलः प्रलीनकलुषः सुभ्रातृपुत्रानुगो वंशोऽस्ति प्रकटः सदौषधिनिधिः **श्रीधर्कटानां पट्टः** १

सारासारविचारचारुचतुरः सारार्थवद्धादरः, संसारोदरवर्त्तिजंतुशरणः श्रीमज्जिनार्चापरः ।

करुण्याकरसद्गुरु(स्तु)तिवशप्रातार्थदानोद्यतस्तत्राल्मयीकुलक्रमोचितरतः **सन्नेमिचंद्रोऽभवत्** ॥ २ ॥

तस्यानघा घनपयोधरयुग्मरन्या, रामानुरूपगुणरंजितभर्तृचित्ता ।

चिंताव्यतः तफलदायकधर्म्मलीना, **निर्व्वाणि** नाम विदिता जनतासु पत्नी ॥ ३ ॥

जीवाजीवपदार्थसार्थवचनः संपूर्णचंद्राननः, सर्वाधीनधनः सलीलगमनः क्रोधेभपंचाननः ।

नैपुण्यार्जितसज्जनः प्रतिदिनं प्रारब्धदानावनः, सूनुः श्लाघितसर्व्वदेव भुवनख्याताभिधानस्तयाः ॥४॥

देवेन केनापि कदाचिदेष नीतो रजन्यां स्वगृहात् प्रसुप्तः ।

अष्टापदे वंदितवाञ्जिनेंद्रान् प्रातः स्वहस्ते कुसुमं ददर्श ॥ ५ ॥

सदा दानासक्ता स्वकुलविमलाचारनिरता, सुशीलप्रख्याता परहितरता दैन्यरहिता ।

असमानातिक्रांता गुणगणयुता सज्जनमता । सदच्छुप्ता नामावर सहचरी तस्य च तयोः ॥ ६ ॥

लक्ष्मीपतिः सुतनयोऽजनि यक्षदेवः, श्रीराजिनीनयनसम्मद आम्रदेवः ।
धांधी मनोभवनदीपकचांदिगाख्यस्तुर्यो यशोमतिवधूप्रियपुंडरीकः ॥ ७ ॥
चतुर्भि रेभिर्जिनधर्मलीनैर्वि भाविताशावशवाब्धिगावैः ।
व्यधायि धंधा(धंधा)णकसन्निवेशे, शरण्यचंद्रप्रभदेवहर्म्यं॥ ८ ॥
प्रत्याख्यानं येन कृत्वैदनादेः,पद्भ्यां निग्नत्यो (त्रिर्गत्याऽप्यो) जयंते नगेंद्रे ।
श्रीमन्नेमिर्वंदितः पूजितश्च, क्षिप्रं भूयात् यक्षदेवः स सौख्यी ॥ ९ ॥
यक्षदेवस्य तत्योयमी जातवान्, चारुपुत्रः प्रियः शांतनामादिमः ।
धर्मकर्मसुशीलाऽऽम्रदत्ताभिधः । क्रोधकोपाजितः कामरूपोऽजितः ॥ १० ॥
धर्मार्थादिचतुः प्रकारपुरुषस्यार्थोयतस्यान्यदा, द्वौ द्वौ सुंदरभार्ययोर्वरसुतौ श्राद्धाम्रदेवस्य तौ ।
संजातौ कुलजः श्रियः सुसरलौ पार्श्वाख्यमृणागको ।-
राजन्यो बुधलक्ष्मणो गुणनिधिर्नागेंद्रनामानघः ॥ ११ ॥
सन्नेमिचंद्र गुणमंदिर देवचंद्रस्तु तुर्यं व्यजनि चांदिगनामधेयः।
मद्युम्नशंबकृतनामकसुऽम्वलांगं, सत्पुंडरीकसुधियाऽजनि पुत्रयुग्मं ॥ १२ ॥
नागेंद्रः शुभधर्मकर्मनिरतः सन्मोहिनी भार्यया, पद्मावत्यभिधानया सरलया स्वल्लीयया संयुतः ।
चाहिन्या सुतया सुतेन गुणिना सुश्रीकुमारेण वै । शांतापत्ययशःप्रियानघयशोदेवेन धर्मार्थिना १३
अथान्यदा दानतपोविधानसुभावना शीलसनाथधर्मे ।
जिनप्रणीते विदधत् प्रयत्नं, शृणोति धर्म्यं वचनं गुरुभ्यः ॥ १४ ॥
तद्यथानिरवधि भववार्धौ कर्मदोषाद् भ्रमंतः, प्रवरशरणहीना योनिलक्षेषु जीवाः ।
कथमपि त्रुटियोगान् मानुषं जन्मरत्नं, सकलगुणविशिष्टं कष्टलक्षैर्लभन्ते ॥ १५ ॥
प्राप्य तत्प्राणिभिः प्रार्थितार्थप्रदं प्रेरणाप्रोचतप्रांजलप्रेरितैः ।
प्रत्यहं चिन्तयित्वा धनावस्थिरं, कर्तुमेवोचितं चारु जैनं वचः ॥ १६ ॥
प्राणातिपातविरतिप्रमुखानि यानि, जैनागमे निगदितानि महाव्रतानि ।
तानि क्षमा यदि न कर्तुमशक्ति योगायूयं कुरुध्वममलं गृहिधर्ममेनं ॥ १७ ॥
कर्तव्यं जिनपुंगवस्य महनं स्तोत्रैश्च तत्संस्तवः सेव्यः साधुजनः प्रसन्नवदनैः श्रव्यं जिनेंद्रोदितं ।
चिंत्या द्वादश भावना निजहिते कार्यः प्रयत्नो महान्,
शक्त्या चान्यहिते भवाब्धितरणप्रत्युद्यतैः प्राणिभिः ॥ १८ ॥
मोहादिद्विपकुंभभेदनविधौ येषां सदा पौरुषं, कामित्वं कमनीयमुक्तिललनापीनस्तनस्पर्शने ।
न्यायोपात्तधनं गतं जिनमतक्षेत्रेषु सप्तस्वहो,तेषां पौरुषकामिना विभावना मन्ये कृतार्था भुवि ॥१९॥
रम्ये श्रीजिनपुंगवस्य सदने बिंबे तदीयेऽनघे । संघे श्राव्यतने प्रशस्तचरिते प्रोयच तुर्वर्णके ।
सर्वज्ञागमलेखने विनिहितं वित्तं भवेत् पुष्टिदं,सत्(न)क्षेत्रे विधिनोप्तमिष्टसमये शाल्यादि बीजं यथा २०
ये कृत्वा जिनमंदिराणि विधिना संपूज्यवस्त्रादिभिः, श्रीसंघं समुपानयीतिविभवः श्रद्धापराः श्रावकाः ।

स्याद्वादप्रतिबद्धवाक्यजनकश्रीवीररागेण यतन्निर्णीतं किल लेखयंति भविनः किं किं न तैः सत्कृतं ? २१
श्रुत्वा पुस्तकवाचनामनुदिनं गृह्णंति केचिद् व्रतं, देवाधीशजिनेंद्रपूजनपराः श्राद्धा भवेयुः परे ।
अन्ये भद्रकभावभावितमनःसद्धर्मयोग्या नरा, जायंते खलु यस्य पुस्तकमिदं हेतुः स तत्श्रेयसः ॥२२॥
इत्याकर्ण्य जिनप्रणीतमनघं धर्म्मंगुरुभ्यस्ततः पर्यालोच्य कुटुंबकेन गुणिना नागेंद्रनामा गृही ।
सिद्धाख्येन कृतां कथामुपमिति सिद्धांतसारोद्धृतां, तोपादेप सुधीर्व्यलीलिखदिमां स्वश्रेयसे पुस्तके २३
यावन् मेरुः प्रतपति रविर्द्योतते यावदिंदु र्यावद् वायुः स्फुरति गगने तारकाः संति यावत् ।
यावद् भूमिः प्रवहति पयः सागरे यावदेतत् तावन् नंद्याद् गुणिभिरनिशं पुस्तकं वाच्यमानं ॥
॥ मंगलं महाश्रीः ॥

## ७९५७ श्री शांतिनाथजी ज्ञान भंडार. खंभात.

श्रीनिर्भयभीमव्यायोगः । ता. प्र. १७

समाप्तोऽयं निर्भयभीमनामा व्यायोगः । कृतिरियं प्रबंधशतुकर्तुर्महाकवेः रामचंद्रस्य । यादृशं पुस्तके दृष्टं, तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा, मम दोषो न दीयते ॥ संवत् १३०६ वर्षे भाद्रवा वदि ६ रवावद्येह श्रीमहाराजकुलश्रीउदलसिंहकल्याणविजयराज्ये निर्भयभीमनामा व्यायोगो लिखित इति । शुभं भवतु लेखकपाठकयोः ॥

## ७६२२ श्री जैनधर्म प्रसारक सभा. भावनगर.

श्रीउपदेशमाला । ता. प्र. १८

संवत् १३८३ वर्षे कार्तिक शुदि १३ शनौ, अद्येह श्रीदेवगिरौ साधुराजसिंहसुतसाधु-तिहुणसिंहेन श्रीमदुपदेशमाला लघुपुस्तिका लिखापिता ॥

यादृशं पुस्तके दृष्टं, तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा, मम दोषो न दीयते ॥ मंगलमस्तु ॥ शुभं भवतु ॥

## ७०२३ श्री शांतिनाथजी ज्ञान भंडार. खंभात.

श्रीजंबुद्वीपप्रज्ञप्ति । ता. प्र. १९

ॐ नमः । ओकेशवंशे जगसिंहसाधोस्तनूद्भवोऽजायत साधुमुख्यः ।
वदान्यधुर्यः पद्माभिधानः, ख्यातः पृथिव्यां गुणगौरवेण ॥ १ ॥
प्रियाऽस्ति तस्यामलशीलभूषणेनालंकृता पूनसिरीति नाम्नी ।
तत्कुक्षिपाथोरुहराजहंसी, राजू प्रसिद्धाऽस्ति सुता सु(तु)तस्य ॥ २ ॥

........४८........भवत्साधु श्रीमान्नरपतिर्गुणी । तस्याभवत्तनूजन्मा, साधुगोलाभिधानतः ॥४॥
तत्प्रियाऽजनि पूनाहि, पुण्यकर्मैकतत्परा । श्रीसर्वज्ञार्चने निष्ठा, शै(शी)लरत्नैकमंडना ॥ ५ ॥

तस्याः कुक्षिविभूषणं विजयवान् **श्रीआसधिराभिधः,**
साधुः श्रीजिनशासनोन्नति.........लं सर्वत्र यो गान्य(गीय)ते ॥ ६ ॥
मौनं पुण्यमिव प्रौढं, चतुरक्षि २४ जिनालयं । योऽचीकरत्तमांशत्रुंजयभूधर मंडनं ॥ ७ ॥
स्तंभतीर्थपुरे, सोर्जीत्रिके, कावीपुरे तथा । टींवाल्य(ल्ये च)पुरे, हार्थीदेणे नगरकेऽपि च ॥८॥
अणहिल्लाभिधे दंगे, तथा ग्रामे वलासरे । यः श्रीजिनगृहान्.........निजं जनुः सदापियः ॥१०॥
तस्य संघपतेरस्ति सा राजूः प्राणवल्लभा । धर्मकर्मैकनिष्णाता, शीलालंकारधारिणी ॥ ११ ॥
श्रीमज्जिनेंद्रपूजाद्यैर्दानाद्यैरपि नित्यशः । कृतार्थयति यो जन्म स्वं नैकैः पुण्यकर्मभिः ॥ १२ ॥
इतश्च—
विश्वख्याततपागणा....दिनिखिलग्रंथार्थवित्स्वामिनः, सूरींद्रा विहरंति केवलमिलाजीवोपकाराय ये ॥१३॥
तेषां श्रीयुतदेवसुंदर इति ख्याताभिधानां गुरू-
त्तंसानाममृतादतीवसरसां श्रुत्वा जवादेशनाम् ॥....साऽलेखयत् ॥ १४ ॥
॥ युग्मं ॥ श्रीसंघनृपस्यवासव....लिभार्ति दिन भोजीः...........

## ७०१५ श्री हुकममुनीजी ज्ञानभंडार. सुरत.

**श्रीपंचमस्थानविषमपद्व्याख्या.** ता. प्र. २०

इति युगप्रधानश्रीजिनेश्वरसूरिशिष्यलेशश्रीअभयतिलकोपाध्यायनिर्मितायां पंचमस्थान-न्यायमहातर्कविषमपदव्याख्यायां न्यायालंकाराख्यायां । पञ्चमोऽध्यायः । समर्थितः । शुभं भवतु, सर्वकल्याणमस्तु ॥
यादृशं पुस्तके दृष्टं, तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा, मम दोषो न दीयते ॥ १ ॥

स्वस्ति संवत् १४८० वर्षे अद्येह श्री । डुंगरपुरनगरे राउल श्रीगइपालदेव राज्ये श्रीपार्श्वचैत्यालये लिखितं पचाकेन ॥

## ७०२८ श्री शांतिनाथजी ज्ञान भंडार. खंभात.

**श्रीपृथ्वीचंद्रचरित्रम्** ता. प्र. २१

सम्वत १२१२ वर्षे ज्येष्ट सुदि १४ । गुरावद्येह श्रीमदणहिल्लनयर समतो ( सामन्तोपनमना ) सेसमवि(धि)भात पं(च)महाशब्दवाद्यमानं चौलुक्यकुलकमलकलिकाविकासं कर्णाटरायमानमर्दनकरं सपादलक्षराष्ट्रवनदहनदावानलंमालवे राष्ट्रे निजाज्ञया संस्थापनकरं मूलराजपाटोद्वहनधुराधौरेयं पार्वतीप्रियवरलब्धप्रसादं इत्यादिसमस्तराजावलीमालालंकारविराजमानश्रीकुमरपालदेवविजयराज्ये तत्पादावाप्तप्रसादमहाप्रचंडदंडनायकश्रीवोसरि लाट देश मंडले महीद( य )

मुनयोरंतराले समस्तव्यापारान् परिपंथयंतीत्येतस्मिन् काले **जीणे(णो)**रग्रामे नियमसंजमस्वाध्याय-ध्यानानुरतपरमभट्टारकआचार्यश्रीमद**जितसिंहसूरि**क्ते श्रावकसोढूकेन परमश्रद्धायुक्तेन **पृथ्वीचंद्र-चरित्र**पुस्तकं विशुद्धबुद्धिना लिखापितं । लिखितं च पंडित**मदनसिंहे**नेति ॥ मंगलं महाश्रीः ॥

संवत् १४७८ वर्षे वैज्ञानिकशिरोमणिपूज्यपं० **शान्तिसुंदरगणि**पादैः सर्वं चित्कोश-कार्यं गंजुकसमारचनादिमकारि, भारु(भृगु)कच्छकशालायाम् । श्रीसंघस्य शुभं भवतु श्रीचित्कोशेन॥ **पं० शांतिसुंदरगणि**भिश्चित्कोशगंजुकसमारचनादिकृत्यं विदधे ॥ श्रीः ॥

## ७०४८ श्री शांतिनाथजी ज्ञान भंडार. खंभात.

**श्रीसप्तमं पर्वम् ( त्रिशष्ठीय )** ता. प्र. २२

समाप्तं चेदं सप्तमं पर्व ॥ रामलक्ष्मणदशानना नमिस्तीर्थकृच्च हरिषेण .... .... .... वर्णिताः श्रुति सुखाय संतु वः ॥ ग्रंथाग्रंथ ३८८८ ॥ सं. १३१८ वर्षे ज्येष्ठ शुदि २ रवावद्येह दंडाधिपश्री .... .... .... पति महाराजाधिराजश्री**अर्जुनदेव**कल्याणविजयराज्ये तन्नियुक्त महं० **श्रीसोम**प्रतिपत्तौ ठकु० **विकम्बसी** .... .... ....लेखितेयमिति ॥

यादृशं पुस्तके दृष्टं, तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा, मम दोषो न दीयते ॥ लेखकपाठकयोः ॥ शिवमस्तु सर्वजगतः ॥ मंगलं महाश्रीः ॥ शुभं भवतु ॥

## ७९४७ श्री शांतिनाथजी ज्ञान भंडार. खंभात.

**श्री(समराइच्चकहा) समरादित्यकथा.** ता. प्र. २१

वंशः **श्रीपल्लिवालोऽस्ति,** सशाखः शतवर्धवान् । भूभृतोऽप्यधरीचक्रे येनैकछत्रितात्मना ॥ १ ॥
अजनि विनयपात्रं तत्र पुंरत्नचूडामणिमलितकीर्तिः **साढदेवा**भिधानः ॥
निरुपमजिनराजस्मेरपादारविंदाविचलविहितसेवावाप्तविश्वप्रतिष्ठः ॥ २ ॥
शीलव्रतदृढा **साढू** संज्ञिता तस्य वल्लभा । जिनक्रमयुगाम्भोजे यन्मनो हंसकायते ॥ ३ ॥
भ्राताऽभूत् साढदेवस्य **देशलः** सत्यशीलितः । **पद्मी**नामधेयाऽथ, प्रिया तस्य विवेकिनी ॥ ४ ॥
आसीत्श्रेष्ठि(सु) **साढदेवतनुभूजाजाक** नामा जिनश्रेणिध्याननिशा(णतेजि)तमतिप्राकाश्यनश्यत्तमाः
शश्वद्यस्य यशःप्रसूनमसमं राकानिशानायकज्योतिःशालितनिर्मलाम्बर(तले)मोदाय यज्जातवान् ॥५॥
जाया तस्य **जयतुका** समभवद् दीनानुकंपारसासारासिक्तविवेककंदलवनं संस्तारबद्धादरा ।
निलध्यातजिनेश्वरांह्रिनखरुग् ध्वस्तांधकारांकुरे । यस्याश्चित्तगृहोदरे प्रतिपदं धर्मः सुखं खेलति ॥६॥
पुत्रो **लाखण**संज्ञितोऽजनि तयोः पुण्यैकपात्रं कृती नीतिज्ञो विनयी नयी सुकुलजो दक्षः क्षमादक्षिणः।
येनोत्तुंगनिजान्वया (योच्चय) वयमहानूभ्रि स्फुटं दिग्विस्तारि यशः सुकेतनपटः प्रस्तारयामासिवान् ॥७॥

जाजाकस्यामवद् भ्राता जसपालाभिधः सुधीः । संतुका संज्ञिता तस्य दयिता दानशालिनी ॥८॥
जातौ तयोः सुतौ रत्नधनसिंहाभिधावुभौ । भगिनी जानुका नाम्नी बभूवाम्नायभूषणं ॥ ९ ॥
अथ—

जायाऽजायत लापणस्य कुलजा दानोद्यता रुक्मिणी, नाम्ना दीनसुवच्छ(रस)त्र्यऽन्वयिनी पुण्येंदिरा मंदिरे॥
यस्या मानसपंकजे त्यजति नो पक्षद्वयीनिर्म्मलो, धर्म्मो हंसयुवा युतो वरल(ट)या तीर्थेशभक्त्याख्यया ॥१०॥
नरपतिरिति नामा लापणस्यांगजन्मा, तदनु भुवनपालाख्यो यशोदेवसंज्ञः ॥
क्रमश इह तनूजा जज्ञिरे तस्य तीर्थाधिपतिसुगुरुपूजालब्धलक्ष्मीविकाशाः ॥ ११ ॥
जाल्हणदेवीति सुता जासी नामा तथा परा पुत्री । सद्धर्मकर्मनिपुणा कुरमादिमा दुहितरोऽभूवन् १२
आसीत् कुलीनचरिता नायिकदेवी नरपतेर्दयिता । अपरा च गौरदेवी तनुभूः रामंतसिंहाख्यः॥१३॥
यशोदेवस्य पत्नी सोहरा संज्ञयेति प्रतिजज्ञे । तस्याः समभूत् पुत्रः सांगणनामा स्फुरद्धामा ॥१४॥
प्रिया भुवनपालस्य पाउंदेवीति संज्ञिता । बभूव भाग्यभूः शीलरत्नरत्नाकरावनिः ॥ १५ ॥

मातुस्तातो राजपालाभिधानः मातुर्माता यस्य राणीति नाम्नी ।
मातुर्भ्राता राणिगो वूटडिश्च मातुः पक्षो लापणस्याघमुक्तः ॥ १६ ॥
श्रीमज्जिनेशप्रभुहस्तपद्माधिवासतोलापणनामधेयः ॥
तीर्थेशयात्रादिककर्म्मनिर्म्मलः, कुलप्रदीपः सुजनोपकारी ॥ १७ ॥
अथान्यदा लापण एष हृष्टः, सदृष्टशास्त्रार्थविनीतचेष्टः ।
भवस्वरूपं क्षणदृष्टनष्टं, विभावयामास निशावसाने ॥ १८ ॥
प्रातः प्रयातः सुगुरोः समीपे, तदेव तत्रैव तथा निशम्य ।
ततः प्रबोधार्कमुदृष्टवस्तुना, समाधिना ध्यायति सर्वमर्थदः ॥ १९ ॥

तथाहि—

देहं दुःखैकगेहं जलनिधिलहरीचंचलं जीवितव्यं, संपत्तिः प्राणभाजां प्रसृमरपवनोद्धूतकेतूपमेया ।
सौंदर्यं सुभ्रुनेत्रांचलट्ललितसमं बंधुसंगोऽप्यनित्यो, जैन धर्मं विनाऽन्यन्नहि मनुजभवे शाश्वतं किंचिदस्ति॥२०॥
दानशीलतपोभावभेदैर्धर्मश्चतुर्विधः । मुख्यतो यतयो दानमेवैकं संप्रचक्षते ॥ २१ ॥
यद्यपि त्रिविधं शास्त्रे, तद्दानं ननु विश्रुतम् । तथापि ज्ञानदानाख्यो, दानमन्यत् प्रशस्यते ॥ २२ ॥
ज्ञानं श्रुताश्रितं प्रोक्तं, श्रुतं शास्त्रमिति स्मृतं । तच्च द्विधा समाख्यातं, कल्पिताऽऽचरितक्रमात् ॥२३॥
तद्द्वयोचितं किंचित्, चरितं सुनिरूपये । इति चिंतयतस्तस्य, स्मृतिगोचरतां गतं ॥ २४ ॥
चरित्रं समरादित्यभूभुजः प्रशमास्पदम् । संसारिजीववैराग्यरसनिस्यन्दभाजनं ॥ २५ ॥
(द्वैपव्याघ्र) हुताशनं शमवृन्दपूर्णार्णवं दुर्णयध्वांतध्वंसनभास्करं कलिमलप्रक्षालनैकामृतं ।
एतत्सच्चरितं सुचारु समरादित्यशितुः शाश्वतो यद्वा श्रीहरिभद्रसूरिगुरुणा संवेगसंगाय नः ॥ २६ ॥
यदिदं वस्तु संसारे तदिष्टेषु नियोज्यते । अन्यदिष्टं हि ना दृष्टं, मातरं पितरं विना ॥ २७ ॥
मातुर्जपतुकाया निजपितृजाजाद्वयस्य पुण्याय । समरादित्यचरित्रं लेखितं लापणेनैतत् ॥२८॥

ज्येष्ठोऽभूत् किल **देवचंद्र** इति यो द्रव्यं व्ययित्वा निजं,
सत्तीर्थेषु शिवाय संघपतिरित्याख्यां सुधीर्लब्धवान् ॥ ३ ॥
**नामंधराख्योऽथ महाधराख्योऽतो वीरधवलाभिधभीमदेवौ** ।
पुत्री तथा **धाहिणि**नामिकाऽभूत्, सर्वेऽपि जैनांह्रिसरोजभृंगाः ॥ ४ ॥
श्रीदेवभद्रगणिपादसरोरुहालेर्भक्त्या नमद्विजयचंद्रमुनीश्वरस्य ।
देवेंद्रसूरिसुगुरोः पदपद्ममूले, तत्रान्तिमौ जगृहतुः यतितां शिवोत्कौ ॥५॥
**नाइके**स्तु सुता जातास्तत्र ज्येष्ठो **धनेश्वरः** ।
**खेत्ता** नाम्नी प्रिया तस्य, **अरसिंहा**दयस्सुताः ॥ ६ ॥
द्वितीयोकः सुसाधुः श्रुतवचनसुधास्वादनातृप्तचित्तः,
श्रीमज्जैनेंद्रबिंबप्रवरजिनगृहप्रोल्लसत्पुस्तकादौ ।
सप्तक्षेत्र्यां प्रभूतव्ययितनिजधनो **लाहडा** नामतोऽ–
भूल्लक्ष्मीश्रीरित्यभिख्या सुचरितसहिता तस्य भार्या सदार्या ॥७॥
**अभयकुमाराभिख्यस्तृतीयोऽजनि नंदनः** ।
यो दध्रे मानसं धर्मश्रद्धासंबंधबंधुरं ॥ ८ ॥
धर्मे सहायाः **सहदेवसाधोः, सौभाग्यदेवी**ति बभूव जाया ।
पुत्रौ च **षेढाभिधगोसलाख्यौ**, प्रभावकौ श्रीजिनशासनस्य ॥ ९ ॥
किंच यौ कृत्वा गुणसंघकेलिभवनं श्रीसंघमुच्चैस्तरां,
श्रीशत्रुंजयरैवतप्रभृतिषु प्रख्याततीर्थेषु च ।
न्यायोपार्जितमर्थसार्थनिवहं स्वीयं व्ययित्वा भृशं,
लेभा ( ते शुचिराय सं )घपतिरित्या ख्यांस्फुटां भूतले ॥ १० ॥
आद्यस्य जज्ञे किल **खिन्वदेवी** नाम्ना कलत्रं सुविवेकपात्रं ।
तथा सुता **जेहड–हेमचंद्र–कुमारपाला** भिध– **पासदेवाः** ॥११॥*

## ७०२४ श्री शांतिनाथजी ज्ञानभंडार. खंभात.

**श्रीमहावीरचरित्रम् ( त्रिषष्टियं )** ता. प्र. २६

× × × × सोऽस्तु वीरः, तदनुविदितधामा गौतमस्वामिनामा ।
अपहरतु परेषामापदं वैरिशाखासफलितजनिताशा विश्वविश्वप्रकाशा ॥ १ ॥

* ताडपत्र प्रशस्ति नं. २४ अने २५ एकज वंशनी छे. पण नं. २४ मां पहेला सात श्लोक त्रटक होवाथी ते श्लोको पूरा करवा माटे ता. प्र. नं. २५ ना पहेला अगीआर श्लोको ज लीधा छे तेथी अनुसंधान माटे जुओ ता. प. प्र. नं. २४ पाने १८ अने १९.

तस्यां शंवर आम्बरं कुलगृहं लक्ष्म्याः क्षमालिंगितः....येन मुदि चयः ।
नित्यं श्रीपतिकेलिमंदिरमसौ मुक्तो न मर्यादया....विजयते संडेरगच्छांबुधिः ॥२॥

पूर्वं चाल्भगच्छमंडनमणिः संडेरगच्छ मो–
पत्तेर्हींगिनिका न करतुतेबुधः शाली नर्भांमोधरः ।
× × × × ×
लड़े शांतिमुनिश्वरः किल शराश्वाम्यब्दे वृन्दे गते ।
यद्व्याल्या गलगर्जितैः सुरविमुर्विश्वमरा वैभवात् ॥ ३ ॥
आचार्यवृन्देपु तदीयगच्छे, जातेष्वभूत् धर्मजनेपु........ ।
श्रीलायतीलोचनबाणकामं वीरं विनिर्जित्य बभूव शब्दः ॥ ४ ॥

समजनि मुनिरत्नं तस्य शिष्यावतंसः, सुरपतिल्लनाभिः सस्पृहं गीतकीर्तिः ।
सुकृतिभिरभिवंद्यः श्रीयशोभद्रसूरिर्नवजलधरधारासन्निभोक्तिरतंद्रः ॥ ५ ॥

येपामावाल्यकालाद्विकृतिपरिहृति वर्जितं ताम्बूलं च....
घे मेघावृष्टिः सकललिपिवाचनेऽम्बा निपेधः ।
पंडेरे पल्लिकाग्यानयनमथ नमोधर्मं नेत्यादिकानि,
श्रुत्वा नानाद्भुतानि त्रिजगति कृतिनो–क्षेमर्षिन्नाजनि चांतराले,
मराल्लीला इति मागधानां ।
वंशोऽस्ति श्रीडाकरराजहंसः शुभ्रैर्यशोभिर्धवलीकृतात्मा ॥ ७ ॥
येनोत्तुंगविशालकंवलगिरौ स्थात्तं तपो दुर्लभ । •
[1]............
मुमुक्षोः शिवपथि यततः साधुसार्थाधिपत्यं ॥ १६ ॥
तस्मादत्र जितेन्द्रियः शमनिधिर्विद्यावधूदर्प्पणः ॥
श्रीमानीश्वरसूरिरित्यभिधया वाचंयमग्रामणीः ।
यो बालोऽपि धुरं बभार महतीं धौरेयवल्लील्या,
धीरः पंचमहाव्रतं प्रणयिनीं वैराग्यवीतस्पृहः ॥ १७ ॥
तत्रास्ति सुकृतिपट्टे सूरिमंडलमंडनः । शालिसूरिरयं नामा गुणरत्नैकरोहणः॥१८॥

इह धर्कटवंशेऽभूद् वरदेवोऽभिधानतः । निश्चितं वरदेवोऽयं, पुरुपः कुलभूपणं ॥ १ ॥
भार्या पूर्णमतिस्तस्य, पूर्णा पूर्णमतिर्मता । तत्कुक्षिसंभवाः पंच, तनुजाः पांडवा इव ॥ २ ॥
आद्यो लक्ष्मीधराख्योऽभूत्, द्वितीयो नाथुताभिधः ॥
तृतीयः पासडः ख्यातश्चतुर्थः कालियाभिधः ॥ ३ ॥
पंचमो जगदेवाख्यः सुकृतिकृतिवत्सलः । भार्या लक्ष्मीधरस्याभूत्, कमलश्रीरितिनामिका ॥४॥

१ ग्रादर्शा छोड़ लगीना नव श्लोक मळ्या नथी.

तत्कुक्षिमानसे राजहंसो राजाक इत्यभूत् । राजाकस्य मता भार्याऽभयश्रीरिति संज्ञया ॥५॥
तस्याः सुतद्वयं जज्ञे, प्रथमोऽभयपालकः । द्वितीयो हरिचंद्राख्यश्चंद्रवच्चारुकान्तिमान् ॥६॥
पासडस्य हि भार्याऽभूत्, जयश्रीरिति नामतः । तया सुतद्वयं जातं, पुत्रिकाद्वितयं तथा ॥७॥
यथार्थितस्वनाभाऽभूत्, कुलंधरो धुरि कृती । द्वितीयो देवसिंहाह्वो, देवादिर्गुरुभक्तिभाग् ॥८॥

पुत्रिका मोहिणिख्याता, सदा धर्मपरायणा । द्वितीया सोहिणिर्जाता, गुरुस्वजनवत्सलः ॥ ९ ॥
कुलधरस्य भार्याऽऽसीत्, देवश्रीरिति नामतः । रूपलावण्यसंयुक्तो नरसिंहः सुतोऽभवत् ॥ १० ॥
नरसिंहस्य भार्यास्ति, नाम्ना लाच्छीति विश्रुता । कलत्रं देवसिंहस्य, देवमतिरिति श्रुता ॥११॥
तस्याः सुतद्वयं जातं, पुत्रिकात्रितयं तथा । आद्यो नयणसिंहाख्यः, परः पृथिमसिंहकः ॥१२॥
पुत्रिका मयणू नाम्नी, द्वितीया भीमिणिस्तथा । तृतीया आल्हका जाता, स्वाजन्यगुणवत्सला॥१३॥
कलत्रं कालीयाकस्य धनश्रीरिव देहिनी । तस्याः कुक्षिसमुद्भूतौ, पुत्रौ धीणा धरणिगौ॥ १४ ॥
मेइणीति तथा पुत्री हांसिका झंझुके परे । जगदेवस्य जायाऽस्ति, नगश्रीरिति संज्ञया ॥१५॥
तस्याः कुक्षेस्तु संजातास्तनुजास्त्रय इहोत्तमाः । आद्यः क्षेमसिंहस्तु, पांगुरत्रश्च वयंजलः ॥१६॥
पुत्रिकात्रितयं जज्ञे, छाडि केलु च लीलुका । भार्याऽस्ति क्षेमसिंहस्य, रूपिणीति सुविश्रुता ॥१७॥
जातं तत्पुत्रचतुष्कं, लक्षणं हरदेवकः । तृतीयोऽरपतिर्नाम, चतुर्थो वेलुकाभिधः ॥ १८ ॥

× × × ×

खूडा भार्याच चाहुलु तत्पुत्रः पद्मनामकः ॥ १९ ॥
इत्थं कुटुम्बेन समं विचिन्त्य, संसारसर्वस्वमनित्यमेव ।
स्वकीयमातुः परिपुण्यहेतुः, श्रीवीरवृत्तं परिलेखयित्वा ॥
पुस्तकं वाचयामास, देवसिंहो महामतिः ।
नंदताद् यावच्चंद्रार्कं, संघेन सह सर्वथा शुभं भवतु ॥

## ७८७३. श्री आ. क. ज्ञानभंडार. लींबडी.

**श्रीज्ञाताधर्मसूत्रवृत्तिः** ता. प्र. २७

अनुत्तरो पपाकाख्यातं नवमांगप्रदेश विवरणं समाप्तं ॥
संवत् ११८४ माघ सु ११ रवौ अद्येह श्रीमदणहिलपाटके महाराजाधिराजश्री–
जयसिंघदेवकल्याणविजयराज्ये ज्ञाताधर्मकथाअंगवृत्तिर्लिखितेति ॥
शिवमस्तु सर्व्वजगतः परहितनिरता भवंतु भूतगणाः ।
दोषाः प्रयांतु नाशं सर्व्वत्र सुखीभवतु लोकः ॥ १ ॥

ज्ञाताधर्मकथांगचतुष्टयवृत्तिः ॥

श्रे० देशल पुत्र यशहड मूल्ण रामदेवस्य, ॥ पुस्तकमिदं ॥*

प्राग्यच्छायो जन्मभूमिर्गुणानां दिक्पर्यन्तव्यापिशाखाकलापः ।
पत्रोपेतः पर्व्वभिर्व्वर्द्धमानः प्राग्वाटानामस्ति विस्तारिवंशः ॥ १ ॥

तत्र प्रजज्ञे हृदयालयेषु, कृतस्थितिः पुण्यवतो जनस्य ।
वृत्तोज्वलः कांतिकलापपात्रं........श्रावक सर्व्वदेवः ॥ २ ॥

अवदाता प्रभेवास्य तमः प्रसरवारिणी । महिमेति सुविख्याता, बभूव सहचारिणी ॥ ३ ॥
ताभ्यां पुरस्कृतनयस्तनयोऽजनिष्ट, निष्ठापरः परमसंयमिनां वरिष्ठः ।
राजन्यमान्यमहिमा हिमपूरगौरैः । ख्यातो गुणैर्जगति श्रेगुल्लनामधेयः ॥ ४ ॥

जाताऽस्य प्रेयसी मान्या, सीमाऽन्या रूपसंपदः, पूर्णदेवीति सौभाग्यमसौभाग्यं च बिभ्रती ॥५॥
जातमपत्यचतुष्टयमाभ्यामभ्यस्तशास्तजिनधर्म्मे । भुवनगुरुबिंबपूजनकृतादरं मंदिरं नीतेः ॥ ६ ॥
प्रथमो देहडनामा, देशलनामा सुतोऽपरस्तत्र । मोहिणि–पुन्निणिसंज्ञे पुत्र्यौ पात्रं विनयलक्ष्म्याः॥७॥
एषां मध्ये सहृदयहृदयो धार्मिकः श्रावकाणां मुख्यः श्रीमान्मथितकुमतो वर्त्तते देशलाख्यः ।
यस्याजस्रं श्रवणपुटकैः सयशःक्षीरपूरं पायं पायं कथमपि जना नैव तृप्तिं भजंति ॥ ८ ॥

किंच—

गांभीर्येण पयोनिधिर्धिषणया वृंदारकाणां गुरोस्तुंगत्वेन सुपर्व्वपर्व्वतपतेः सौम्येन शीतत्विषः ।
सौंदर्येण मनोभवस्य विभवित्वेनोत्तराशापतेर्योऽत्यंतं प्रतिपंथ्यपि त्रिजगतीमित्रं परं कीर्त्यते ॥ ९ ॥

अन्यच—

न्यायार्जितेन विभवेन भवांतहेतोः, स्वीयाढ्योचितमनूल्लयेन येन ।
त्रिलोक्यकैरवविकासशशांकबिंबं विधापितं पश्चिमतीर्थभर्त्तुः ॥ १० ॥

शीलालंकारवती स्थिरदेवी वल्लभाऽभवदस्य ।
हंसे यदीयमनसा मनागपि न तीर्थिकवचस्सु ॥ ११ ॥

अनयोः संजातास्ते तनूरुहा यशहडादयः सदयाः ।
मारोद्धतिमारोहति विलोक्य कायश्रियं येषां ॥ १२ ॥

अन्यदा देशलः श्रुत्वा, तत्रापिपगुरोर्गिरः । प्रवृत्तश्चेतसा सार्द्धं, समालोचयितुं चिरं ॥ १३ ॥

तथाहि—

अहो भ्रात श्चेतो गुणगणनिधे ! किं नु भगसि, क्षणं वार्त्तामेकां शृणु ननु मदीयामवहितं ।
भवांभोधेरस्मिन् महति पततां हंत भविनां, विना जैनं धर्म्मं क्वचिदपि शरणं नास्ति नियतं ॥ १४ ॥

---

* भट्टारकश्रीधर्मघोषसूरिशिष्य श्रीसोमचंद्रसूरि...

## श्री शांतिनाथजी ज्ञान भंडार. खंभात.

**श्री षट् कर्मग्रंथः** ता. प्र. ३३

ओकेशवंशभूषणपदमसुत सा० बीजड भार्या विकमदे तत्सुता श्री सारज नाम्नी सा० आमसिंहसुत सा० धर्मसिंह भार्या सदा नानाविधपुण्यकृत्यपरायणा श्रीमत्तपागच्छमंडन सुविहित चक्रचूडामणि भट्टारक श्री देवसुंदरसूरीणामुपदेशेन स्वश्रेयसे नव्यकर्मग्रंथवृत्तिपुस्तकं श्री विक्रम नृप संवत् १४४७ वर्षे लेखयामास, आचंद्रार्कं पुस्तकोऽसौ बुधैर्वाच्यमानो नंदतात् ॥

## श्री शांतिनाथजी ज्ञान भंडार. खंभात.

**श्री उपदेशमाला वृत्तिः** ता. प्र. ३४

श्रीमन्नर्बुदतुंगशैलशिखरच्छायाप्रतिष्ठापदे, धर्माणाभिधसन्निवेशविषये (न्य)ग्रोधवृक्षो वभौ ।
यत्शाखा शतसंख्य(मध्य) वहलच्छायास्वपायाहतं, सौख्येनोषितसंघमुख्यशकटश्रेणीशतीपंचकं ॥१॥
लग्ने क्वापि समस्तकार्यजनके सप्तग्रहालोकने ।
ज्ञात्वा ज्ञानवशाद् गुरुः पृथु हितं श्रीसर्वदेवाभिधः ।
आचार्यान् रचयांचकार चतुरस्तस्मात् प्रवृद्धो वभौ ।
चंद्रोऽयं वरगच्छनामरुचिरो जीयात् युगानां शतं ॥ २ ॥
तत्र लोकादश (तत्वालोकन) सूरिराजविपुते (ले) गच्छे प्रतिष्ठाधिकः,
पूर्वं श्रीजिनचंद्रसूरिरभवत् श्रीमंधरद्योतकः ।
शुद्धात्मा धवलक्कके पुरवरे यो(षो)ढाकचैत्यांतरे,
श्रीसंघप्रभवप्रभावविपुले .... .... तेन द्योतिनी(न्तेवासिवृन्दैर्वृतः) ॥ ३ ॥

तस्मिन् पट्टमहोदधौ नयविधुः श्री आम्रदेवाभिधो यद्वाख्यानमदोषशास्त्ररचनं चंचन्मतिर्ज्योतिमान् यद् व्याख्यान रसायनामृतमहालोभादिहोदेवता कौश्मांडिः सं(समु)पागमत् प्रमुदिता जीयात् स सूरिप्रभुः ॥४॥ तस्य .... .... .... .... आदि सूरिरभवत् श्रीनेमिचंद्राभिधो, धर्मा (धार) जिनद्वयी सुचरितप्रख्यातकीर्तिस्ततः । तार्तीयो मुनिपुङ्गवस्समजनि श्रीमान् यशोदेवयुक् सूरिः सच्चरितप्रसिद्धमहिमा संशुद्धधार्यो शशिपियूषो सुरमुख्य शान्ता हसतः सान्द्रे मम स्थानके सम्यग् लक्षण .... .... .... ग साहित्य गच्छच्छपि ।

## श्री शांतिनाथजी ज्ञान भंडार. खंभात.

**श्री आख्यानमणिकोश सद्वृत्तिः** ता. प्र. ३५

इति श्रीमदाम्रदेवसूरिविरचित वृत्ताख्यानकमणिकोशवृत्तिः समाप्तमिति ॥ मंगलं महाश्रीः ॥ शिवमस्तु सर्वजगतः, परहितनिरता भवंतु भूतगणाः । दोषाः प्रयांतु नाशं सर्वत्र सुखी भवतु लोकः ॥

प्राग्वाटवंशतिलकोऽजनि पूर्णदेवस्तस्यात्मजास्त्रय इह प्रथिता बभूवुः ।
दुर्वारमारकरिकुंभविभेदसिंहस्तत्रादिमः सलपणोऽभिधया बभूव ॥ १ ॥

द्वितीयकोऽभूद् वरदेवनामा तृतीयकोऽभूज्जिनदेवसंज्ञः ।
सोऽन्येद्युरादत्त जिनेंद्रदीक्षां निर्वाणसौख्याय मनीषिमुख्यः ॥ २ ॥

अज्ञानध्वांत सूर्यः सरमसविलसत्वंग संवेगरंग ।
क्षोणी क्रोधादियोधप्रतिहतिसुभटो ज्ञातनिःशेषशास्त्रः ।

निर्वेदांभोधिमग्नो भविककुवलयो धोधना (?) धानचंद्रः
कालेनाचार्यवर्ये समजनि जगच्चंद्र इत्याख्यया हि ॥ ३ ॥

वरदेवस्य संजज्ञे वाल्हाविरिति गेहिनी। याऽभूत् सदा जिनेंद्रांह्रिकमलासेवनेऽलिनी॥४॥

पुत्रास्तस्या साढलनामधेय ( रेसिंह ) इत्याह्वयः वज्रसिंहाः ।
विवेकपात्री सहजू च पुत्री कुशीलसंसर्गतरोर्लवित्री ॥ ५ ॥

साढलस्य प्रिया जज्ञे राणूरिति महासती ।
पुत्रास्तु पंच तत्राद्यो धीणाख्यः शुद्धधर्मधीः ॥ ६ ॥

द्वितीयः क्षेमसिंहाख्यो भीमसिंहस्तृतीयकः ।
देवसिंहाभिधस्तुर्ये लघुर्महणसिंहकः ॥ ७ ॥

क्षेमसिंहाभिधो देवसिंहश्च भवभीरुकः । श्रीजगच्चंद्रसूरीणां पार्श्वे व्रतमशिश्रियत् ॥ ८ ॥
धीणाकस्य कडूर्नाम पत्नी मोढाभिधः सुतः । अन्येद्युः सुगुरोर्वाक्यं धीणाकः श्रुतवानिति ॥९॥

भोगास्तुंगतरंगभंगभिदुराः संध्याभ्ररागभ्रमी
पद्मा श्री नलिनीनलस्थितपयोलोलं खलु प्राणितं ।

तारुण्यंतरुणी कटाक्षतरलं प्रेमातडित्स्यं निलो
ज्ञात्वैवंक्षणिकं समं विदधतां धर्मं जनाः ! सुस्थिरम् ॥ १० ॥

सद्ज्ञानयुक्तो नियम दृपोधि भावन्महानंदपदप्रदायी ।
तत्रापि च स्वान्यविबोधकारी त्यागः श्रुतज्ञानभिहोत्तमं हि ॥ ११ ॥

तच्चकालमतिमांद्यदोषतः पुस्तकेषु भुवनैकशालैः ।
पूर्वसूरिभिरथो निवेशितं तद्वरं भवति तस्य लेखनं ॥ १२ ॥

एवं निशम्य तेन न्यायोपार्जितधनेन व्ययेन।
आख्यानकमणिकोशस्य पुस्तकाय व्यधायि मुदा ॥ १३ ॥

यावत्..... .... .... .... .... .... .....वाच्यमाना बुधैः ॥ १४ ॥

## श्री शांतिनाथजी ज्ञान भंडार. खंभात.

श्रीकालिकाचार्यकथाः- ता. प्र. ३६

॥९०॥ श्रीमालवंशोऽस्तिविशालकीर्तिः शांतिसूरिः प्रतिबोधित डीडकाख्यः।
श्रीविक्रमाब्देद नभमाहर्षिवत्सरैः श्रीआदिचैत्यकारापित नवहरे च (?) ॥ १ ॥

तस्य शाखा समुदभूत् देवसिंहो गुणाधिकः।
तत्सुतः कर्म्मसिंहस्य अभूत् पुत्रो मलसिंहकः ॥ २ ॥

महीरोलनगोत्रे च मंडनो धांधकाभिधां
तत्सुतात्रयं संजातं कुद उलदाक नामतः ॥ ३ ॥

हालाक भगिनी यस्य चतुष्टयी।
शीलालंकारधारी च आभूमनी च मइणला ॥ ४ ॥

षट्दर्शनभक्ता उलश्रीरिवाहरि मंडनो। अर्धांगलक्ष्मीः साह्व मलसिंहस्य पुण्यमुक् ॥ ५ ॥
पंचपुत्रा पवित्रा च पंचपुत्री सतीव्रता। कल्पवृक्षसमानेऽपि संघशासनसेवकान् ॥ ६ ॥
धारा रामा कलाषाको जइतसिंहक भीमकौ। उदी पूनी च चांदु च रुक्मिणी सोनणी तथा ॥७॥
धाराक पत्नी च सुव्रता जयश्री तदांगजा वेदमि वा चतुष्टयं।
सधर्म्मणौ पांषण मदनकौ च, रत्नस्य रत्नाकरतुल्यरूप धनसिंह वीरस्वजनप्रियश्च ॥ ८ ॥
रामा पुत्र सुखेताक पद्मोः लाषाक नंदनाः। जइतसिंह सुतो हालू भीमापुत्रीसलक्षणी ॥ ९ ॥
स्वश्रेयसे कारितकल्प पुस्तिका .... पुण्योदय रत्नभूमि श्रीपल्लिगच्छे रवगुणौकधाम्ना ॥
वाचिता श्रीमद् चक्रेश्वरसूरिभिः ॥ १० ॥ छ ॥ छ ॥

नृप विक्रम कालातीत सं. १३६५ वर्षे भाद्रपद वदौ नवम्यां तिथौ श्री मेदपाटमंडले वऊणा ग्रामे कल्प पुस्तिका लिखिता ॥ .... .... .... मंगलं महाश्रीः ॥ शुभं भवतु ॥

संवत् १३७८ वर्षे भाद्रपद सुदि ४ श्रावक मोल्हासुतेन भार्या उदयसिरि समन्वितेन पुत्र सोमा लापा षेता सहितेन श्रावक उदाकेन श्रीकल्पपुस्तिका गृहीत्वा श्री अभयदेवसूरिणां समर्पिता वाचिताय.

## श्री. शां. ज्ञा. भं. खंभात.

श्रीत्रिषष्ठिः (पर्व २-३) ता. प्र. ३७

संवत् १२९५ वर्षे अश्विन वदि २ रवौ अद्येह श्रीवीजापुरपत्तने समस्त राजावली पूर्वकं तपाकीयश्रीपौषधशालायां चरित्रगुणनिधानसमस्तसिद्धांत कालान्मानेन पारगेततपा देवभद्र

गणिमलयकीर्ति पं० फुलचंद्र पं० देवकुमारमुनि नेमिकुमारमुनिप्रमृतिसमस्तसाधूनां तच्चरण-कमळानामक्त परमश्रावक साधु रतनपाल समस्त सिद्धांत पुस्तकानां पौपधशालाभारनिर्वाहक परमश्रावक श्रेष्ठि वील्हण द्वितीयभारनिर्वाहक सधर्म्मिकानां वात्सल्यतत्परे परमश्रावक ठ० आसपाल तृतीयभारनिर्वाहक निरंतरं पुस्तकसिद्धांतनिर्विकल्पमक्त्यासारतत्पर परम श्रावक साधु० लाहड प्रमृतीन् समस्त श्रावकैः त्रिषष्टि पुस्तकं समस्त साधूनां श्रावकाणां पठनवाचन-पुन्य श्रेयोर्थं लिखापितं ॥ छ ॥ लेखक पाठकानां शुभं भवतु ॥ मंगलं महाश्रीः ॥ शिवमस्तु॥छ॥

## श्री शांतिनाथजी ज्ञानभंडार. खंभात.

श्री शांतिनाथ चरित्रम्. ता. प्र. ३८

संवत् १३३० वर्षे आषाढ शुदि १५ शनौ ॥ ॐ० ॥ नमः सर्वज्ञाय ॥

स श्रीशांतिः श्रियेवो(यो)ऽस्तु॥याऽपूर्व्वो मृगलांछनः॥अविनाशि रुचिच्छायः । सदाद्योतः प्रकाशकः ॥

सश्रीकं जिन माहवन् ( वियन् ) लवणिमालीला गृहं रत्न (सू:) ।
स्तरो रुः (चन्द्रः) पूर्णकलामवाप्य मुदितस्तन्वन्नदीनां स्थितिं ॥
शाश्व(श्व)द्वौत्र पतिष्ठा रुचिरसनिलयः साधुवृत्तः समज्जः (स) ।
सत्वाधारः समुद्रोपम इह जयति प्राग्वटनामान्वयः (टीयान्वयोऽयम्)॥ १ ॥
तदन्वये मूद्‌धनदानुकारी सन्मार्गदाश्चैव परोपकारी ।
धनेश्वरो धर्म्म धुरीणदेहस्तस्यांगजोऽभूद्‌धनदाक नामा ॥ ३ ॥

फाशहृदे वरनगरे धनदाकेनादिनाथजिनभुवने । मूलप्रतिमाभिनवास्थाप्यत शुद्धेन चि(वि)त्तेन ॥४॥

श्रेष्ठिनो धनदाकस्य ब्रह्मदेवः सुतः शुभः । वाग्भटश्च सुता चैकालक्ष्मणिः शीलशालिनी ॥ ५ ॥

पुत्रो गोगाक नामाभूद् वाहडस्य गुणश्रियः । गोगाक सूमला पत्नी तयोः पुत्रत्रयं क्रमात् ॥ ६ ॥

ऊषिगधांधूआकडमुख्या साल्हू तथा परा दुहिता । सौभाग्यश्रीदेवीदाख्यां पत्न्यौ शुभाकारे ॥७॥

भार्याऽभूद् बह्मदेवस्य मंदोदरी शुभाशया । तयोः पुत्राश्चतुः संख्या धर्म्मकर्म्मणि कर्म्मठाः ॥८॥

आल्हाकः सकलः कलंकरहितः स्वस्थासच्चाशयो धर्म्मधीः ।
साल्हाको महिमानिधान मतुलो वास्येन सन्नंदकः ॥
राल्हाको गुरुपादपद्मभसलः सर्वज्ञपूजारतः ।
साल्हाकः सवलः सलीलगमनः सत्यव्रतालंकृतः ॥ ९ ॥
राल्हाक कुमारदेव्योः पुत्रत्रितयं तु ब्रह्मणागाय : ।
काल्हूक रत्नसिंहो भवी सोहग सुते द्वे च ॥ १० ॥

आल्हाकोर्जितवित्तादाभरणं श्रीयुगादिदेवस्य । आरत्रिकं च मंगलदीपयुतं कारयामास ॥ ११ ॥

आल्हाकरत्नदेव्यो रत्नत्रयधारकास्त्रयः पुत्राः ।
गुणधरयशधरमुख्या श्राद्धणिसमधर सुताचैका ॥ १२ ॥

समधर भार्या कर्म्मणि पुत्राः सप्त क्रमेण कोलाशुः ।
आसा सपाल सेढा पूना हरिचंद्र वयराख्याः ॥ १३ ॥

गुणधरभार्या स्वच्छा शीलतपोदानभावधर्म्मरता ।
राजमति रंग जातास्तेयोर्जना नंदकाः शस्याः ॥ १४ ॥

पार्श्वभटो वीराकः अंबा लीवाक सोमदेवाश्च ।
शील्ह हीर लड्डहिते जिनधर्म्मे सदोद्यते इयंतंएते ॥ १५ ॥

पासडभार्या साजिणि पुत्रौ द्वौ विजयसिंह नयणाकौ ।
वीरा पत्नी राजश्री सूनुस्त्रितये तु जगपालः ॥ १६ ॥

हरपाल देवपालौ आंबाभार्या च ललतुंका श्रेष्टी ।
नरपालः सुतश्चैको लीवा कल्याण पमाख्या ॥ १७ ॥

विजयश्रीयशधरयोर्नरसिंहस्तहु(सूनु)रतिथिजनभक्तः ।
पाती दुहिता चैकाकुटुम्बमेतच्च सुविशालं ॥ १८ ॥

श्रीभुवनरत्नपूज्याः पारींद्रा वादिकुंजरेण । कांतरानिवृत्तिका गच्छधराः शुभाचाराः ॥ १९ ॥

आनंदप्रभसूरींद्रा स्तत्पदांभोजभानवः । सिद्धांतजलधिपारं प्रापुः प्रज्ञाप्रकर्षेण ॥ २० ॥

तत्पट्टे विशुद्धे श्रीमंतो वीरदेवसूरींद्राः । तत्पट्टे सच्चरिताः धीमंतः कनकदेवाख्याः ॥ २१ ॥

ससुतो गुणधरः श्राद्धः पार्श्वे श्रीकनकदेवसूरीणां ।
धर्म्मोपदेशमतुलं शुश्रावैत्थमघापहं (त्थं त्व घापहं जातु) ॥ २२ ॥

गुणानां सर्व्वेषां जगति जयनी संपदनिशं
यथादोषोः सर्वे जगति गुणतां यांति गृहिणां ।
नवेद्धाव्याद्वस्या जलधिजलकल्लोल चपला परेषांसा
केषां सननिकरे धर्म्मे कार्ये (स्थास्यति चिरं ) ॥ २३ ॥

जिनबिंब भुवन पुस्तकतुर्य विधिसंघ सप्तक्षेत्रेषु ॥
यो वपति वित्तबीजं लभते हि परत्र स वहुफलं ॥ २४ ॥

मुनि क्षेत्रांतर्विशेष पुण्याय विशेष पुण्याय पुस्तक क्षेत्रं,
पुस्तक(म) पित्वयत्प्रभावाद्भवंति धर्म्मोपदेष्टारः ॥ २५ ॥

कलिकालकालाविलसिततमसापिहितेन धर्म्मवररत्ने
श्रत लिषित पुस्तकमये, दीपे तत्प्रकटनं भविनां ॥ २६ ॥

## मु० श्री० हं० वि० सं० शास्त्र संग्रह. वडोदरा.

श्री कल्पसूत्रम् सस्तवकम् प्र. १७२

संवत् १५३८ वर्षे । आपाढ सुदि १३ दिने ॥ श्री सोनी गोत्रे । सा० नाथू । पु० सा० सदसरण । भा० सिंगारदे । पु० सा० दोदा भा० श्रा० मूच नाम्न्या ॥ पुत्र श्री वज्य । सहभू । अमीपाल । वस्तूरूपचंद । प्रभृत्यपरसहितया ॥ निजभावनया पुस्तकमिदमलेखि निज-पिट गुरुभ्यः । उपकेशगच्छे । वा० श्री शालिभद्रमिश्रेभ्य उपकारितं ॥ छ ॥

## श्री, मु० वि० शा० सं० छाणी.

श्री महानिशीथ सूत्रम् प्र. १७३

श्री सीमंधर स्वामिने नमः ॥

अस्ति स्वस्तिकर श्रीगूर्जरधरणीसुलोचनाकारं ।
अणहिल्लपाटकं पुरमपर पुरप्रवरशृंगारं ॥ १ ॥
सौधश्रेणिमनोहरे प्रतिपदं प्रासादशोभावरे
श्रीमत्श्रीअणहिल्लपाटकपुरे पुण्यैकरत्नाकरे ।
श्रीश्रीमालविशालवंशतिलकः प्रौढप्रतिष्ठास्पदं
जातः श्रीमदनः सहर्षवदनः साधुः सदानंदनः ॥ २ ॥
तदंगजो विश्रुतनामधेय त्रैलोक्य लोकोद्भुतभागधेयः ।
बभूव भूवल्लभरूपधेयः श्रीदेवसिंहः स्वकुलैकसिंहः ॥ ३ ॥
तत्सुतः सकलविश्वविश्रुतः संघभक्तिगुरुभक्तिसंयुतः ।
धीरिमादिकगुणैरलंकृतः शोभने सरणाभिधस्ततः ॥ ४ ॥
तस्य शीलगुणनिर्मलगात्रं सत्कलत्रयुगलं गुणपात्रं ।
आदिमा शुभति तत्र हि टीबूः स्त्रीषु रत्नमपरा च खलु लक्ष्मीः ॥ ५ ॥
असूत सूनुद्वयमद्वयश्रीनिकेतनं साम प्रयेतदाद्या ।
आद्यः सदाचारपरः सदाख्यः हेमाभिधो हेमसमौ द्वितीयः ॥ ६ ॥
दीनेषु दानं स्वजनेषु मानं पात्रेषु वित्तं सुकृतेषु चित्तं ।
तदा तदाद्यः सुसदा ददानः सदाभिधः कैन चमत्करोति ॥ ७ ॥

शत्रुंजयाद्रौ गिरिनारशृंगे रंगेण यात्रां किल यश्चकार ।
परोपकारैकपरायणश्रीः श्रीमान् सदाह्वानसुधीः सुधीरः ॥ ८ ॥

कल्याणकत्रयविहारविशालभद्रप्रासादपुण्यसफलीक्रियमाणवित्तः
श्रीपातसाह महिमूद समासुमान्यः सोऽयं सदाभिध सुधीः समभूद् वदान्यः॥९॥

यस्यामंगुरभाग्यभंगीसुभगस्यादसवच्छेरके
त्याख्यां–श्रीमहम्मदाभिध सुरत्राणः स्वयं सोत्सवं ।

दुष्प्रापान्नकणेऽपि योवसुवियच्चिर्व्यंकिते वत्सरे (१५०८)
सत्रागारममंडयत् च वसुधाधारं कृपासागरः ॥ १० ॥

अपरकलत्रसुतः श्रीअहिम्मदावादनगरवास्तव्यः ।
गुरुसेवाकरणरतिर्देवाकः पुण्यहेवाकः ॥ ११ ॥

तज्जाया लज्जायाः सदनं वदनेन विजितरजनिकरा ।
देवश्रीर्देवश्रीरिव श्रीकारणं जयति ॥ १२ ॥

तस्या स्तनुज स्त्रिजगति । शुभति श्री अमरदत्त इत्याख्यः ।
श्री हेमसुतः सुचिरं जयति जगज्जीवजीवाकः ॥ १३ ॥

तस्य प्रशस्या ऽजनि मुक्तमाया । जाया रमाइ रिति नामधेया ।
एवं परीवारविराजमानो मानोज्झितो राजति देवराजः ॥ १४ ॥

अनेन जैनागमभक्तिभाजा राजादिमान्येन धनीश्वरेण ।
वस्वग्निबाणक्षितिमानवर्षे (१५३८) हर्षेण देवाभिधसाधुनात्र ॥ १५ ॥

श्रीमत्तपागणेंद्रश्रीलक्ष्मीसागराह्वसूरीणां ।
श्रीसोमजयगुरूणामुपदेशाल्लेखितः कोशः ॥ १६ ॥

चित्कोशचिंताकरणे धुरीणैः परोपकारप्रयनप्रवीणैः ।
गणाधरैः श्रीजयमंदिराह्वैर्भक्त्या भृशोपक्रम एण चक्रे ॥ १७ ॥

विबुधैर्वाच्यमानोऽसौ शोध्यमानः सुबुद्धिभिः ।
ज्ञानकोशः चिरं जीयात् आचंद्रार्कं जगत्रये ॥ इति प्रशस्तिः

## श्री० जै० सं० ज्ञा० भं० पाटण.

श्रीशांतिनाथचरित्रम् प्र. १७४

सं. १५३८ वर्षे अश्विनिमासे कृष्णपक्षे द्वादशी सोमवासरे शुभनक्षत्र लग्नयोगे ॥ मालपक देसे पातसाह ग्यासदीनि विजयराज्ये । साकरीया ग्रामे । श्रीमद् चन्द्रगच्छे । श्री मानदेवसूरि-श्री मानतुंगसूरि । श्री पद्मदेवसूरि-श्री उदयप्रभसूरि । श्री प्रभाणंदसूरि-श्री धर्मचंद्रसूरि । श्री विनयचंद्रसूरि । श्री विजयप्रभसूरि श्री नरेंद्रसूरि तत्पट्टालंकार श्री वीरचंद्रसूरि शिष्य आचार्यश्री धनप्रभसूरिभिर्लिपितो ॥ स्वपरोपकाराय ॥

## श्री० आ० क० ज्ञा० भं० लींबडी

श्रीयोगशास्त्रम् प्र. १७५

संवत् १५३९ वर्षे भाद्रवा सुदि ५ सोमे महं गोपालपितं ॥ छ ॥ कल्याणमस्तु ॥१॥ ॥ छ ॥ श्रीः ॥

## मु० श्री हं० वि० सं० शा० सं० वडोदरा

श्रीभुवनभानुकेवलिचरित्रम्

संवत् १५४० वर्षे ज्येष्ठ सुदि ६ सोमवार लेखि श्रीभुवनभानुकेवलीचरित्रं । दीववाडि नगरं ॥

## पं० प्र० सं० ज्ञा० भं० अमदावाद

श्रीसूक्तरत्नाकरः प्र. १७६

स्वस्ति संवत् १५४० वर्षे शाके १४०६ प्रवर्त्तमाने चैत्र मासे शुक्ल पक्षे द्वितीया शनौ ॥ श्री मद्गुर्जरधरित्र्यां महाराजाधिराज सकलसुरत्राणमौलि मंडन पातिशाहश्री श्री महमूद विजय राज्ये श्रीमद्गंधारबंदिरे वास्तव्यगुर्जर वृद्ध ज्ञातीय त्राटादरपुरीय । साह भापर सुत परम श्रावक जिनधर्म्म प्रभावक सदाचार धर्माधार साहश्री भादा । तद्भार्या समस्त सती शिरोमणी विनयादि सद्गुण धारिणी श्राविका नारंगदेवि । तत्पुत्रास्त्रयः सा. जीवा साहा जिणा सा. विद्याधर सा. जीवाभार्या द्वे ॥ श्री जीवादे श्री हांसलदे तयोः पुत्रौ द्वौ सा. सहस्रकिरण सहस्रमल्लौ ॥ एवं समये ॥ साहाभादा परलोकं प्राप्ते ॥ साहा जीवाकेन ॥ श्री

वृद्ध तपापक्ष परमभट्टारकश्री श्री रत्नसिंहसूरि ॥ तत्पट्टे श्री उदयवल्लभसूरि श्री ज्ञानसागर सूरि त पटे संप्रतिविद्यमान गच्छनायक प्रभु भट्टारकश्री उदयसागरसूरि स्तत्पट्टे श्री लब्धिसागर सूरि श्री शीलसागर सूरी तयोर्म्मध्ये श्री शीलसागरसूरीणामुपदेशेनश्री श्री मत्सुकृत रत्नाकर ग्रंथद्वयं लिखाप्य स्वश्रेयसेवाचनार्थं प्रदत्तः । गंधार वास्तव्य दीव ज्ञातीय पंडित मूलराज सुत पं. दुडाकेन लिखितोऽयं ॥ छ ॥

द्रव्यं तैः सफलीकृतं निजं० ॥

## श्री० जैं० सं० ज्ञा० भं० पाटण.

श्री आवश्यक निर्युक्तिः प्र. १७७

संवत् १५४१ वर्षे वैशाष सुदि ७ शुक्रे । पत्तने लिखिता । कुलचारित्रगणि योग्या ॥

## श्री जैं० सं० ज्ञा० भं० पाटण.

श्री कालिकाचार्य कथा प्र. १७८

संवत् १५४१ वर्षे मार्गशीर्ष सुदि ११ शुक्रवासरे । श्री अहम्मदावाद वास्तव्य । ओसवाल ज्ञाति शृंगार । सा० रावल भा० रमादे सुत सा० वरसिंग भा० वयजलदे सुत सा० पासा । सदराज पुत्री रुपाइ मृगाइ । एवमादि कुटुंबयुतया श्री वयजलदे नाम्न्या स्वश्रेयोर्थं श्री कल्पसूत्रं लिखापितं । बृहद् तपागच्छे सांप्रत विजयमान पूज्य भ० श्रीउदयसागरसूरीणां सु० शिष्यो पा० श्री चारित्रसागरगणिनामुपदेशेन ॥

श्रीपुष्पमालावचूरिः प्र. १८१

प्रशस्तिः ॥ इतिश्री श्रीपुष्पमालावचूरिः । श्रीहेमचंद्रसूरिविरचिता । शुभं भवतु ॥ संवत १५४२ वर्षे माघ वदि ५ भौमे श्री अणहिल्लपुर पत्तने लिखितमस्तु ॥छ॥ कल्याणमस्तु ॥

## श्री. जैन. सं. ज्ञा. भंडार पाटण.

श्रीप्रत्याख्यानम् प्र. १८२

सं० १५४३ वर्षे माह सुदि ६ भूमे, मांडवगढ महादुर्गे मध्ये लिपितं सर्व्वं पठनार्थं ॥ शुभं भवतु ॥ कल्याणमस्तु लेपकपाठकयोः ॥

## प्र० श्री० का० वि० सं० शा० सं० वडोदरा.

श्रीकल्पसूत्रम् (सावचूरि) प्र. ९८३

संवत्त १५४३ वर्षे द्वितीय श्रावण वदि एकादशी दिने अहम्मदावाद वास्तव्य प्राग्वाट ।

ज्ञातीय श्रेष्ठि जुगपाल सुत वइरसी भार्या गउरी तत्पुत्र संघवो जिणदत्त सिद्धांत लिखापितं ॥ छ ॥ शुभं भवतु ॥ छ ॥ कल्याणमस्तु ॥ छ ॥ छ ॥

## श्री. मु. वि. शा. सं. छाणी.

श्रीनलदमयंती महाकाव्यम् प्र. १८४

संवत १५४३ वर्षे ज्येष्ठ वदि १३ सोमे श्री तालध्वज नगरे वृद्ध तपापक्षीय पं०भावरत्न गणे रंतिपदा पं. उदयचंद्रेण स्वपठनाय ॥ श्रीरस्तु ॥ कल्याणं भूयात ॥

## प्र० श्री० का० वि० सं० शा० सं० वडोदरा.

श्रीविपाकसूत्रम् प्र. १८५

स्वस्ति श्री चंद्रप्रभजिनवरमानम्य श्रीसिद्धांत पुस्तकस्य प्रशस्तिर्लिख्यते ॥ श्री विक्रमतः संवत् १५४३ वर्षे चैत्रमासे शुक्लपक्षे । दशमी १० गुरौ । चउरासी ज्ञाति विख्यात । श्री मोढ-ज्ञाति वंशान्वय मंडप श्रीपत्तनमहानगर वास्तव्य । ठ० मुंदा सुत ठ० राम । भार्या तेजू । सुत ठ० महिराज ठ० भोजा तयोर्मध्ये । ठ० महिराजस्य भार्या नाइ सुत ठ० जिणदास । तत् सुत । ठ० हादा ट० नरसिंह । तथा ठ० भोजा भार्या काली सुत ठ० रत्ना ठ० सांगण ठ० कर्मसी प्रमुख कुटुंब सुतोपेतैः श्री एकादशांग पुस्तक लिखापितं । श्रीबृहत्तपापक्षालंकार श्री रत्नाकरसूरीणामन्वये । श्रीजयतिलकसूरि । श्रीरत्नसिंहसूरि । श्रीउदयवल्लभसूरि । श्री ज्ञानसागरसूरि । पट्टपूर्वाचलमार्त्तंडमंडलावतार प्रभुश्रीगच्छाधीश भ० श्रीउदयसागर सूरीश्वर-शिष्य भ०श्रीलब्धिसागरसूरि ।श्रीशीलसागरसूरि । विज्ञजन शिरोरत्नमहो पा० श्रीचारित्र-सागरगणीनां वाचनाय प्राढौकि' । तस्माल्लक्षणोपैतैरनगारकुमारैर्वाच्यमानं चद्रार्कं ॥ यावत् नंदतात् । शुभं भवतु ॥

## मु० श्री० हं० वि० सं० शास्त्र संग्रह. वडोदरा.

श्रीज्ञातासूत्रवृत्तिः प्र. १८६

संवत् १५४३ वर्षे श्रावण वदि १४ शुक्रवारे ( अद्येह श्री भुजंगपुर वास्तव्य—वधी हरताल मारी छे ).

## श्री० आ० क० ज्ञान भंडार. लींबडी.

श्रीजीतकल्पभाष्यम् प्र. १८७

संवत् १५४४ वर्षे संयाधापितां । ग्रंथाग्रंथ २००००.

## श्री० जै० आ० पु० सुरत.

श्रीलघुवृत्तिः प्र. १८८

संवत्त १५४४ वर्षे चैत्र सुदि ५ भोमे प्राह्लादीनपुर वास्तव्य लेखक नाथा लिपितं । ३९

## मु० श्री० हं० वि० सं० शा० सं० वडोदरा.

श्रीऔपपातिकसूत्रवृत्तिः प्र. १८९

अणहिलपाटकनगरे श्रीमद्रोणाख्यसूरिमुख्येन पंडितगणेन गुणवत्प्रियेण संशोधिता वियमिति ॥ शुभं भवतु ॥ ग्रंथाग्रंथ. ३१२५ ॥ संवत्त १५४५ वर्षे भाद्रवा सुदि ६ बुधे ॥ श्रीः ३ ॥

## श्री० जै० आ० पु० सुरत.

श्रीचारित्रमनोरथमाला. प. १९०

संवत् १५४५ वर्षे पं० कमल साधु गणिभिरलेखि श्री वटपल्ली नगरे.

## शेठ. आ० क० ज्ञानभंडार. लींबडी.

श्रीपंचकल्पचूर्णिः प्र. १९१

सं. १५४५ वर्षे इदं पुस्तकं संघापितं ॥ श्री ॥

## श्री० जैन० सं० ज्ञा० भं० पाटण.

श्रीदशवैकालिकसूत्रम् प्र. १९२

संवत् १५४६ वर्षे धर्म्मपुरस्थाने श्री चैत्र पक्षे पूज्य श्री श्री श्री सोमकीर्त्तिसूरि सूरीणां पद आचार्य श्रीभुवनकीर्त्तिसूरिणा लिखापिता दशवैकालिक ॥ ले० साहसोमापार्श्वे शुभं भवतु ॥ श्रीसंघस्य चिरं जीयात् ॥ श्रीः ॥

## श्री. जैन. संघ. ज्ञानभंडार. पाटण.

श्रीद्वितीयाध्यायद्वितीयपादः प्र. १९३

संवत् १५४६ वर्षे ज्येष्ट वदि ३ रवौ मृगशर नक्षत्रे लिखितं ॥ वटलीनगरे लिखितं ॥

॥ वडलीया भ० श्री श्री पासचंद्रसूरि तस्य पट्टे श्री श्री श्री सागरचंद्रसूरि तस्य पट्टे भ० श्री३ सोमचंद्रसूरि वडलीया तस्य पट्टे श्रीमाणकचंद्रसूरि आत्मनो पठनार्थं ॥ पं० सुमतिसागरः ॥छ॥

## श्री. वि. वी. सू. सं. ज्ञा. भं. खंभात.

श्रीनमिराजर्षिअध्ययनम् प्र. १९४

संवत १५४७ वर्षे चैत्र वदि १३ भूमे श्री श्री श्री नागेंद्रगच्छे उपाध्याय श्री श्री श्री श्री श्री ( श्रीपाळक लालशाही मारेली होवाथी वांची शकातुं नथी. )॥ कल्याणविजयं भद्रं कल्याणमस्तु

## श्री मोहनलालजी सं० ज्ञानभंडार. सूर्यपुर.

श्रीकल्पसूत्रम् प्र. १९५

ओकेशवंशप्रवरो विभाति सर्वेषु वंशेषु रमाप्रधानं ।
तस्मिन् सुगोत्रं प्रवरं प्रशस्यते नाम्ना महत्थ जाहडाभिधानं ॥ २ ॥
क्षत्रियवंशः पूर्वं विदितः श्रीराष्ट्रकूट इति नाम्ना ।
श्रीजयचन्द्रो राजा जातश्चतुरंगबलयुक्तः ॥ ३ ॥
तस्यान्वये प्रसिद्धः त्यागी भोगी सदा श्रिया कलितः ।
आस्थामाश्चर्ययुतः संमतो राजा कुलयुधुर्यः ॥ ४ ॥
त्रयोदशमहीपालाः तत्पुत्राः घांघलादिमाः ।
वंशी येषां धरापीठे तरा विस्तरितः श्रियः ॥ ५ ॥
घांघलस्यांगजः श्रेष्टः कुदलाको नरेश्वरः ।
सन्नंदनो रामदेवो रामदेव इव श्रिया ॥ ६ ॥
तत्पुत्र प्रवरश्चासीत् ठक्कुरासिंहनामकः ।
गुरोः समीपतो येन प्राप्तं श्राद्धत्वमुज्ज्वलं ॥ ७ ॥
व्रजनामा बभूवाथ पुण्यकर्म्मणि कर्म्मठः ।
तत्सुतः संप्रतिर्जज्ञे । सत्यागैकप्रधानधीः ॥ ८ ॥
श्रीमत् खेडपुरे रम्ये सदुद्धरणनामकः ।
व्यवहारी श्रियाहारी धनेन धनदोपमः ॥ ९ ॥
चित्रकूटे पुरे रम्ये पार्श्वरायनेयो कारयद्वरां ।
सोवर्णा वल्भी जज्ञे तस्मात्थ जाहडाभिधा ॥ १० ॥

श्रीशांतिपुरे रम्यें भवनं । खेडापुर्यां येनात्रकारितां
प्रतिष्टा विहितातत्र श्रीजिनपत्तिसूरिभिः ॥ ११ ॥
तेषांवासान् गृहीत्वाथाभवन् खरतरः स तु ।
अनेकधर्म्मकर्म्माणि कृतवान्निजवित्ततः ॥ १२ ॥
तत्पुत्रोऽथ कुलधरः कुलभारधुरंधरः ।
प्रौढप्रतापसंयुक्तः शत्रूणां तपनोपमः ॥ १३ ॥
श्रीजावालपुरे भिन्नमाले श्रीवाग्भाटे तथा ।
प्रासादाः कारितास्तेन निजवित्तव्ययाद्वराः ॥ १४ ॥
तत्सूनुरजितो जातः सामंस्तु तदंगजः ।
हेमाभिधः श्रिया युक्तः सूनुर्वादा मिधस्ततः ॥ १५ ॥
तत्पुत्रौ भुवने ख्यातौ मालामलयसिंहकौ ।
मालापुत्रो कुठिलाहः काल्हूनामा तदंगजः ॥ १६ ॥
सूनुर्म्मलयसिंहस्य मंत्री झांझणनामकः ।
सन्मोहणा देवधर भादश्रात् विराजितः ॥ १७ ॥
जांजणस्य सुतः श्रेष्टः श्रीमत्सत्यपुरे पुरे ।
वाहूवान भीमराजेंद्र राज्यभारधुरंधरः ॥ १८ ॥
शत्रुंजये महातीर्थे येन यात्रा कृता वरा।
श्रीसंघं मेलयित्वा वस्वंवित्तं सफलीकृतं ॥ १९ ॥
यजितद्दानेन येनात्र कल्पवृक्षास्तिरस्कृताः ।
यशो यदीयं सर्वत्र विस्तीर्णं भूमिमंडले ॥ २० ॥
श्रीमद्वेगडनामासौ संजातः कुलमंडनं ।
यस्यानुजः सिंगढीद्यः श्रीजिनेश्वरसूरिराट् ॥ २१ ॥
वोल्हणदे नामिकास्य पूर्वपत्नी प्रशस्यते ।
भरतो भरमथापि भोजो भट्टामिधः सुताः ॥ २२ ॥
पराकृति गदे नाम्नी शीलालंकारधारिणी ।
तत्कुक्षिपद्मिनौ हंसौ पुत्रौ द्वौ महिमायुतौ ॥ २३ ॥

आद्यः सूराभिधो मंत्री प्रसिद्धो धरणीतले ।
दानी मानी कलाशाली वदान्यो राजपूजितः ॥ २४ ॥
कलाकलापसंयुक्तः मंत्री भुवनपालकः ।
द्वितीयस्त्वभवत्पुत्रो धनवान् धर्म्मकर्म्मकृत् ॥ २५ ॥
श्रीजिनधर्मसूरीणां पदस्थापनमादरात् ।
येनाकारि स्वसंपत्या महैवकपुरोत्तमैः । ॥ २६ ॥
भार्या भुवनपालस्य कर्णादेवी मनोहरा ।
तस्याश्चत्वारः सत्पुत्राः पुत्री पंत्रकमुत्तमं ॥ २७ ॥
प्रथमो धनदत्ताह्वः गंगादत्तस्तथापरः ।
सिवनामा तृतीयस्तु । तुर्यः संग्रामः इत्यमी ॥ २८ ॥
तेषां मध्ये सुपुण्यात्मा गंगादत्तो गुणाधिकः ।
नाम्ना लेंगमदेवी भार्या तस्य प्रजायत ॥ २९ ॥
तत्कुक्षि शुक्तिमुक्ताभाः पुत्राः पंच गुणोज्वलाः ।
राजसिंहः श्रिया शाली मंत्रीशो राजवल्लभः ॥ ३० ॥
जसाभिधानाराणांह्वः मंत्री दूदाभिधस्तथा ।
मही कर्ण इति ख्यातः सर्व्वे सर्वत्र भूतले ॥ ३१ ॥
तन्मध्य मंत्रिवर्यस्तु राजसिंहो विशेषतः ।
त्यागी भोगी यशस्वी श्रीमान् कुलविभूषणः । ॥ ३२ ॥
पदस्थापन कर्म्मादि पुण्यकार्याण्यनेकशः ।
कृतानीह पुनः कर्त्ता संपत्तेरनुमानतः ॥ ३३ ॥
भार्या राजलदेवीति सतीकुलमतल्लिका ।
चंवणात्रीयभोजाह्वनंदनी गुणबंधुरा ॥ ३४ ॥
तस्याः कुक्षौ सुरत्नानि रत्नभूमौ यथा स्फुटं ।
पुत्ररत्नान्यजायंत तन्नामानियथा क्रमं ॥ ३५ ॥
आद्यः सत्ताभिधो मंत्री सौंदर्यादिगुणान्वितः ।
सत्तादेवी प्रिया तस्य विद्यते गुणसंयुता ॥ ३६ ॥

पताभिध सुपुण्यात्मा पावूनाम्नीति तत्प्रिया
नेताभिधानः सत्पुत्र प्रिया नवरंगदे इति ॥ ३७ ॥
कुर्यथतुर्थनामासौ भार्या रूपीतिनामिका ।
वाघाभिधानो देपुरः लघुपुत्रद्वयं वरः ॥ ३८ ॥
प्रथमा पुत्रिका येठी रंगी नाम्नी द्वितीयका ।
ठंगी नाम्नी तृतीया तु पुत्रीत्रितयमुत्तमं. ॥ ३९ ॥
तेनेदं राजसिंहेन परिवारयुतेन च ।
सौवर्णैरक्षरैः श्रेष्ठं श्रीकल्पागमपुस्तकं ॥ ४० ॥
श्रीमत् खरतरगच्छे श्रीजिनदत्तसूरयः ।
तेषां गच्छे क्रमे जातः जिनकुशलनामकः ॥ ४१ ॥
श्रीजिनपद्मसूरींद्रा जिनलब्धिरततः प्रभुः ।
श्रीजिनचंद्रसूरीशस्तत्पट्टोद्धरणः प्रभुः ॥ ४२ ॥
श्रीजिनेश्वरसूरींद्रो विख्यातो जगतीतले ।
तत्पट्टे प्रगटश्चासीत् श्रीजिनशेखरसूरिराट् ॥ ४३ ॥
तत्पट्टाभरणं श्रीमान् जिनधर्म्मसुनीश्वरः ।
तस्याणुजिनचंद्राख्यसूरिमुख्योपदेशतः ॥ ४४ ॥
श्रीविक्रमतो पट्वेदेपुशशिसंख्यया (१५४६) वत्सरे ।
अश्विने मासे लिखापितमिदं महत् ॥ ४५ ॥
सौवर्णैरक्षरैर्युक्तं चित्रश्रेणीविराजितं ।
सुचं सूत्रार्थसंयुक्तं पुस्तकं जयतादिदं. ॥ ४६ ॥
पुण्यवृद्धै समृद्ध्यैव वाच्यमानं सदाभव ।
मंत्रीशराजसिंहस्य श्रीकल्पागमपुस्तकं । ॥ ४७ ॥
यावद्धराधरो मेरुश्चंद्रसूर्यौ ध्रुवस्तथा ।
श्रीकल्पपुस्तकं तावद्वाच्यमानं तु नंदतात् ॥ ४८ ॥

इति श्री कल्पपुस्तकप्रशस्ति ॥ ॥ शुभं भवतु ॥ ॥ श्रीः ॥ छ ॥

सं० १५४७ वर्षे आसो सुदि १० दिने वा० क्षमामूर्ति गणि उद्यमेन लिपितं जो०वड्आ। केन म० राजसिंहकल्पपुस्तकं ॥ शुभं भवतु ॥

## श्री मो० मो० जैन ज्ञानभंडार पाटण,

श्रीशीलोपदेशमाला प्र. १९६

संवत् १५४७ वर्षे चैत्र शुद २ दिने लिखिता पं० संघज्ञानगणिना । मालवण वास्तव्य दो० पेथा भार्या वाछु सूता–श्रा० सोभागिणि कृते ॥ परोपकाराय ॥ शुभं भवतु ॥

## श्री जैनसंघ ज्ञानभंडार पाटण.

श्रीउत्तराध्ययनं सूत्रम् प्र. १९७

संवत् १५४८ वर्षे कार्तिक सुदि ३ गुरु ॥ श्रीअणहलपुरनगरे ॥ श्रीतपागच्छे ॥ श्रीजिनरत्नसूरि ॥ शिष्य पंडित पुण्यकीर्त्तिगणि तत् शिष्य ॥ पंडितसाधुसुंदरगणिपठनार्थं ॥ ॥श्रीः॥ प्राग्वाट ज्ञातीय श्रेष्टिधीराभार्यासुश्राविकासदूनाम्न्या सुतआसधर रूपासहितेन पुस्तिका लिखापिता संपूर्णः ॥ शुभं भवतु कल्याणं ॥ श्रीजीरायल्लीपार्श्वनाथप्रसादेन ॥

## श्री जैन आनंद पुस्तकालय सुरत.

श्रीधन्यचरित्रम् प्र. १९८

(कीर्तिहंसीयम्)

संवत् १५४८ वर्षे श्रावण सुदि त्रयोदशी सोमे श्रीखरतरगच्छे श्रीजिनेश्वरसूरिसंताने श्री जिनधर्म्मसूरिपट्टालंकारचूडामणि श्रीजिनचंद्रसूरिवराणां वाचनाय पं० कीर्तिहंसमुनिना श्री धनाह्वगुणचरित्रमलेखि श्रीजेसलमेरु महादुर्गे चिरं नंदतु.

## श्री जैन संघ ज्ञान भंडार पाटण.

श्रीशांतिनाथचरित्रम् प्र. १९९

ग्रंथाग्रे ॥ ४८५० ॥ संवत् १५४८ वर्षे फाल्गुन मासे शुक्लपक्षे एकादश्यांतिथौ

वीरमग्रामवास्तव्यः ॥ प्राग्वाटमुकुटोपमः ।
श्रेष्टीठाकुरसिंहाख्यः । श्रीधर्माराधको भवत् ॥ १ ॥

वान्नूनाम्नी प्रिया तस्य निःसीमगुणमंदिरं ।
तस्याः पीभाकताइयाऽभिधौ गुणनिधी सुतौ ॥ २ ॥

इतश्च तत्र जेसाको व्यवहारिशिरोमणिः ।
रमाईतस्य मार्यामूच्छीलाळंकारभूषिता ॥ ३ ॥
धारा वीरा हीरा हरदे पांचाभिधास्तयोः पुत्राः ।
अभवंस्तेषु च बूटीरिति पांचाकस्य कांतासीत् ॥ ४ ॥
अनयोस्तनयौ च धनाकान्हाख्यौ पुत्रीकाश्चतस्रश्च
कीकी, ललतू, अरधू, वानूनाम्न्यः सतीमुख्याः ॥ ५ ॥
पीमाभिध तानूनाम्नी परिणीतवान् महेभ्यवरः ।
सोजामेयानजीसुग् नागलदेवी द्वितीयाह्वा ॥ ६ ॥
श्रीधर्महंस सुगुरूपदेशतोऽष्टांबुधितिथिमिते (१५४८) वर्षे ।
श्रीशांतिजिनचरित्रं सुचरित्रो लेखयामास ॥ ७ ॥
श्रीइंद्रहंससुगुरोर्महारयत्प्रतिमिहेभ्यकान्हाकः ।
पुस्तकमाचंद्रार्कं वाच्यमानं चिरं जीयात् ॥ ८ ॥ छ ॥ श्रीः ॥ छ ॥ श्रीः ॥

## श्री विजय वीर सूरीश्वर ज्ञा० भं० राधनपुर.

श्रीआनंदसुंदरग्रंथः ( अपरनाम श्री वर्द्धमान देशना ) प्र. २००

इति श्रीमदानंदसुंदरग्रंथप्रशस्तिः स्वस्तिकारिणी संपूर्णः । शिवमस्तु सर्वजगतः ॥ श्री वरकाणा पार्श्वप्रसन्नो भूयात् । संवत १५४९ वर्षे कार्तिक वदि १२ देने । मंडपाचल वास्तव्य मंडल महादुर्गे । सुरताणग्याससाहविजयराज्ये ॥ सुल्ताणनासीरसाहराज्ये । छ ॥ श्रीपत्तनमध्ये वास्तव्यमोढ ज्ञातीय लेपक लक्ष्मीधर लिखितं । छ ॥ या दृशं पुस्तकं दृष्ट्वा....................
..........। तैलाद्रक्षे.... । शुभं भवतु । पं० जिणसुरगणियोग्यं । आनंदसुंदरग्रंथ.

## मु० श्री० दो० वि० सं० शा० सं० छाणी.

श्रीकाव्यकल्पलतावृत्तिः प्र. २०१

संवत १५४९ वर्षे मार्ग शुदि १४ दिने लिखिता श्री मउठा ग्रामे श्रीरस्तु संघस्य.

## प्र. श्री. कां. वि. सं. शा. सं. वडोदरा.

श्रीसार्द्धशतकवृत्ति. प्र. २०२

संवत् १५४९ वर्षे आषाढ सुदि ७ रवि । श्रीअणहिलपुरपत्तनवास्तव्य औदीच्यज्ञातीयः आचार्यकालासुतपूतालिखितं शुभं भवतु ॥

## शेठ मो० मो० ज्ञान भंडार पाटण.

**श्रीकल्पव्याख्या** प्र. २०३

संवत् १५५० वर्षे आषाढ शुदि ११ शनौ श्रीस्थंभतीर्थे जोषी पोपा लक्षतं ॥

## श्री. मु० वि० शा० सं० छाणी.

**श्री उपदेशमाला बालावबोधः** प्र. २०४

संवत् १५५१ वर्षे खरतरगच्छे श्रीजिनवर्द्धनसूरि श्रीजिनचंद्रसूरि श्रीजिनसागरसूरि श्रीजिन-सुंदर सूरीणां पट्टे श्रीजिनहर्षसूरि श्रीअणहिल्ल पाटके ओकेशवंशे हाटीया गोत्रे सा० वेलापुत्र सा० हर्षापुत्र सा० नागराज पठनार्थं श्री शीलोपदेशमाला बालावबोधो लेखयांचक्रे ॥श्रीरस्तु॥शुभं भवतु॥

## मु. श्री हं. वि. सं. शास्त्रसंग्रह वडोदरा.

**श्रीपिंडनिर्युक्तिः** प्र. २०५

नंदुरबारनिवासो भीमः संघाधिपोऽभवद् भविकः ।
श्रीजिनधर्माधारस्तत् तनयो डुंगरस्सुकृतिः ॥ १ ॥
सद्वंशैकविलास प्राग्वाटः प्रकट जिनमताभ्यासी
गुणराजा गुणवान् पदप्रदिष्ठादिकारयिता ॥ २ ॥
श्रीशत्रुंजय रैवत जीरापल्ल्यर्बुदादियात्रासु ।
वित्तव्ययसफलीकृतजन्मा तदंवलषमाइ ॥ ३ ॥
तनयस्तयोः सुविनयः कौलूनामा कृतानुकृतः
सुकृती तज्जाया जसमाइ ललतादेवी च वीराइ ॥ ४ ॥
श्रीजिनभवन जिनार्चापुस्तकसंघादिकेसदा क्षेत्रे ।
वित्तव्ययस्य कर्त्ता दानार्थी जनान् समुद्धर्त्ता ॥५॥युग्मं
श्रीमत् कालू नाम्ना निजकरकमलार्जितेन वित्तेन ।
चित्कोशे सिद्धांताः ससूत्रकाः वृत्तिसंयुक्ताः ॥ ६ ॥
श्रीमद्वाचकनायकमहीसमुद्राभिधानमुखकमलात् ।
लब्ध्वावरोपदेशंनंदंतु वा लखिताः सुचिरं ॥ ७ ॥

महोपाध्याय श्रीमहीसमुद्रगणिशिष्य पं० कनकविजयगणि लिखापिता ॥
संवत् १५५१ वर्षे आसो सुद १० शुक्रे ॥

## प्र. श्री. कां. वि. सं. शा. सं. वडोदरा.

श्रीऋषभपंचाशिका प्र. २०६

लिखिता श्रुतसौभाग्यगणिभिः । प्रमादसौभाग्यमुनि भणनार्थं । सं. १५५१ वर्षे श्रीरस्तु ॥

## श्री. लेरुभाई वकील ज्ञान भंडार पाटण.

श्री दशवैकालिक सूत्रम् प्र. २०७

तपागच्छाधिराज भट्टारक पुरंदर श्रीसोमसुंदरसूरिशिष्य भट्टारक प्रभुश्री सोमदेवसूरिशिष्य भट्टारकश्री सुमतिसुंदरसूरिशिष्य भट्टारक प्रभु श्रीकमलकलशसूरिशिष्य पं० भुवनसोमगणिभिः आणंदभुवनगणि पठनार्थं सं. १५५१ वर्षे डीसा नगरे ॥

## श्री० जै० सं० ज्ञान भं० पाटण.

श्री पिंडनिर्युक्तिवृत्तिः प्र. २०८

संवत् १५५१ वर्षे माघ वदि १३ भौमे श्रीचंद्रपुरीनगरे श्रीखरतरगच्छे श्रीजिनसमुद्रसूरिविजयराज्ये आचार्य श्रीशांतिसागरसूरि विजयमाने श्रीतपोरत्नोपाध्यायशिष्य वाचनाचार्य पुण्यदेवगणिशिष्य वा० लाभमंदिरगणिभिः लिखापिता ॥ कायस्थ गौडान्वय काशीवास्तव्य श्रीसूर्यदासात्मज लक्ष्मीदासेनालेखि ॥ शुभं ॥

## आ. श्री वि० दा० सू० सं० शास्त्र संग्रह छाणी

श्रीललितविस्तरा प्र. २०९

शुभं भवतु । कल्याणमस्तु । श्री । श्री । श्री । संवत १५५१ वर्षे श्री पत्तननगरे खरतरगच्छे श्री जिनवर्द्धनसूरीश्वरास्तत्पट्टे श्रीजिनचन्द्रसूरयस्तत्पट्टे श्रीजिनसागरसूरयस्तेषामन्वये श्री जिनसुंदरसूरयस्तत्पट्टे पूर्वाचल सहस्रकरकराणिभिः श्रीजिनहर्षसूरिभिः श्री ललितविस्तरा चैत्यवंदन वृत्तिस्तत्पंजिका चेत्रे अलेखितां ॥ शुभमस्तु श्रीसंघस्य । श्रीरस्तु ।

## आ० श्री० विजयदान सूरीश्वर सं० शास्त्र संग्रह छाणी.

श्री षड्दर्शनवृत्तिः प्र. २१०

संवत १५५१ वर्षे पोष वदि १ रवि श्रीअहमदावादे ॥ जोशी पोपाकेन लेखितं ॥१॥

## श्री. नि. वि. जी. मणि. पुस्त. चाणस्मा

श्री शाश्वतजिन स्तवनम् प्र. २११

संवत् १५५१ वर्षे पं. समयरत्नगणिशिष्य भुजिष्येण पं. श्रीरत्नगणिना श्रीमाणिकिपुत्री सं० नाथी पठनार्थं ॥ श्रीः १ ॥

## श्री जैन संघ ज्ञान भंडार पाटण.

श्रीउपासगदसांग मूल प्र. २१२

संवत् १५५२ वर्षे जैष्ट सुदि ५ दिने बृहसपति वासरे ॥ वाहुद्रव्यपुरे श्रीमौनखानराज्ये ॥ श्री श्रीधर्म्मसूरिसंताने ॥ उ० श्री श्री श्री माणिक्यसुंदर मिश्राणां शिष्य महोपाध्याय श्री श्री श्रीमतिसुंदरमिश्राणां ॥ मुनिमेरुनंदन लिखितां ॥ शुभं भवतु ॥ छ ॥

## प्र. श्री. कां. वि. सं० शा. सं, वडोदरा.

श्रीआवश्यकबृहद्वृत्तिः प्र. २१३

॥ ९० ॥ संवत् १५५३ वर्षे । आसउज सुदि ५ रवौ श्री वहादरपुरे श्री बृहद्गच्छ । वा० मनोदये शि० वा० जयकेशरि तच्छिष्य मु० जयसागरेण लिलेखि । स्वकर्मक्षयनिमित्तं शुभं भवतु ।

## प्रवर्त्तक श्री० कां० वि० सं० शा० सं० वडोदरा.

श्रीउपदेश तरंगिणी प्र. २१४

सं० १५५३ वर्षे भाद्रवा सुदि १२ शुक्रे देवपल्लीनगरे पंडित प्रवर शिरोमणि पं. साधुविजयगणिशिष्य सोमविजयगणिना लेखिता ॥ श्रीः ॥

## श्री वाडी पार्श्वनाथजी ज्ञान भंडार पाटण.

श्रीदीवसागर प्रज्ञप्तिः प्र. २१५

पूज्य पंडित कनकविजयगणिशिष्येण लखितं सं० काल्हू चित्कोश सत्का प्रतिरियं द्वीपसागर प्रज्ञप्तिः ॥ श्रीरस्तु ॥ संवत् १५५३ वर्षे फागुण सुदि २ शनौ.

## श्री जैन संघ ज्ञान भंडार पाटण.

श्रीवर्धमानदेशना प्र. २१६

संवत् १५५३ वर्षे कार्तिक मासे कृष्ण पक्षे प्रतिपदातिथौ । गुरुवारे विशाखा नक्षत्रे श्री

चित्रकूटमहादुर्गे राणा श्रीरायमल्लविजयराज्ये श्रीरुद्रपल्लीयगच्छे रू. श्रीदेवसुंदरसूरिसंताने. ऊ० श्री आणंदसुंदरमिश्राणां तेषां शिष्य आचार्यश्री विनयराजसूरिमिर्लिलेखि एयं उपाशगदशानां चरित्रं वाच्यमानं चिरं नंदतु ॥ मांगल्यमस्तु ॥ यादृशं.....................................दोषो न दीयते ॥

## श्री लेरुभाइ वकील ज्ञानभंडार पाटण.

श्रीलघुक्षेत्रसमासविवरणम् प्र. २१७

संवत् १५५३ वर्षे कार्तिक सुदि सप्तम्यां तिथौ अद्येह श्री नागपुरवरे । गुरुवारे । मुनि श्रुतसागरेण लघु क्षेत्र समास विवरणमलीलिखत् ॥ चिरं जीयात् ॥

## श्री कि. वी. सू. ज्ञान भंडार राधनपुर.

श्रीपार्श्वनाथचरित्रम् प्र. २१८

संवत् १५ चैत्रादि ५४ वर्षे महामांगल्य मार्गसिर मासे कृष्णपक्षे द्वादशी तिथौ भूमवासरे श्रीपल्लीमहास्थाने ॥ यादृशं..................................मम दोषो न दीयते ॥ कल्याणं भूयात्। वीतराग प्रसादात् ।

## प्र० श्री कां० वि० सं० शा० सं० वडोदरा:

श्रीलघु चाक्यनीतिः प्र. २१९

संवत् १५५४ वर्षे वैशाष मासे शुक्लपक्षे पूर्णिमातिथौ शनिवासरे पूर्णिमापक्षे श्रीजयप्रभसूरितत्पट्टालंकार श्री भुवनप्रभसूरिशिष्य वीरकलश लिषितं । श्रीरस्तु ॥ शुभं भवतु ॥

## श्री जैन आनंद पुस्तकालय सुरत.

श्री सिद्धहैम शब्दानुशासनवृत्तिः प्र. २२०

पूज्याराध्य पं. कनकविजयगणि शिष्य अमरसमुद्र गणिना लखितं संवत् १५५४ वर्षे अशाढ सुदि १३ सोमे श्रीमति नंदुरबार महानगरे ॥ स्वपरोपकाराय ॥

## श्री जैन विद्याशाळा ज्ञानभंडार अमदावाद.

श्री शत्रुंजयमहात्म्यम् प्र. २२१

स्वस्तिश्रीमदिह मेदपाटदेशे श्रीकुंभलमेरु महादुर्गे महाराणा श्रीरायमल्लविजयीराज्ये ॥

संवत् १५५५ वर्षे वैशाख सुदि ३ शनौ श्रीसंडेरगच्छे श्रीयशोभद्रसूरि संताने श्रीईश्वरसूरीणां शिष्य वाचनाचार्य श्रीपद्मसागर गजेंद्राणां शिष्येण मुनि निधिशीलराजेन लिखितं स्वपरोपकाराय वाचनाय ॥ भद्रं भूयात् लेखकपाठकयोः कल्याणं भूयात् ॥ आचंद्रार्कं निश्चलं भवतु पुस्तकमिदं ॥ ॥छ॥ श्रीरस्तु ॥ मांगल्यमस्तु ॥ गुरुप्रसादात् ।

## आ० श्री० वि० सू० सि० सं० शा० सं० छाणी

श्री भुवनभानु केवलि चरित्रम् । प्र. २२२

संवत् १५५५ वर्षे श्री पत्तन महानगरे भाद्रपद मासे शुक्ल पक्षे १० तिथौ सोमवारे । श्री मंडप महादुर्ग वास्तव्य सोनी श्री नागराज पत्नी संघविणी जसमाइ पुत्र्या महं अमरा सुश्रावक पत्न्या पद्माइ सुश्राविकया पुत्री हंसाइ सहतया श्री भुवनभानु केवली चरित्रं संपूर्णं लिखितं तद्गीतार्थैः सुश्राविकादिभिर्वाच्यमानं । चिरंनंदतात् । श्रेयसेव भूयात् ॥

## श्री० जै० आ० पु० सुरत.

श्री आवश्यक निर्युक्तिः प्र. २२३

संवत् १५५६ वर्षे श्रा० वदि पडवे भौमे अणहिल्लपुरपत्तने लिखितं अगमच्छे श्री अमरसिंघसूरि पट्टालंकार श्री हेमरत्नसूरि तत्पटेश्री अमररत्नसूरि स्तत्पटे पूज्याराध्य श्री श्री सोमरत्नसूरि सद्गुरु तस्य शिष्यणी प्रवर्त्तनी सोभाग्यलिक्ष्मीगणि प्र० वर्द्धमानलक्ष्मीगणि सहिता तया वायडज्ञातीय मंत्री जावड भार्या कर्मी सुता श्राविकापुण्यप्रभाविका देवगुरुपद कमल राजहंसी श्रा० गेली पठनार्थं पुस्तिका लिखापिता ॥ ठ ॥ श्रीः ॥ ॥ ठ ॥ शुभं भवतु ॥

## श्री. नि० वि० जी० म० पुस्तकालय चाणस्मा.

उपदेशचिंतामणिवृत्तिः र. नं. ४४२४ प्र. २२४

संवत् १५५६ वर्षे भाद्रवा वदि १४ सोमवासरे श्री पत्तननगरे श्री अंचलगच्छे लिखिता ॥ छ ॥ श्रीः ॥ ग्रथाग्रंथ २९३६ श्री रंगवर्द्धनगणींद्रशिष्याणां दयावर्द्धन गणि प्रवराणामेषा प्रतिः श्रीर्भवतु ॥

## श्रीं. जैन सं. ज्ञानभंडार पाटण.

श्री उपदेशमालावचूरिः प्र. २२५

संवत् १५५६ वर्षे अश्विन मासे शुक्लेतर पक्षे एकादश्यां तिथौ गुरुवासरे रूपपुरे........ श्री भुवनप्रभसूरीणां शिष्येन:.......मुनि पद्मार्णदेनैषा श्री उपदेशमालावचूरिः स्वपठनायान्येषां पठनाय लीलिखत् ॥

## श्री० विजयवीर सूरिश्वरजी ज्ञानमंदिर राधनपुर.

श्रीदौर्गसिंहवृत्तिः र. १३५४४ प्र. २२६

सं० १५ आषाढादि ५६ वर्षे । शाके १४२१ प्रवर्तमाने फाल्गुन मासे शुक्ल पक्षे । तृतीयायां तिथौ । रविदिने । मीनराशिस्थितेचंद्रे ॥ तद्दिने ॥ श्री भानुराशि राज्यं कुर्वाणे अद्येह । श्री इलदुर्गे । श्री श्री । हारीजगच्छे । पूज्ये श्री सिंघदत्तसूरि तत् शिष्येण उदयसागरेण अवचूर्णिः कृता ॥ जयकलशेन सूत्रमलिखि ॥ सूत्रद्वयस्वादि । अवचूर्णि जयकुशलेनेव कृता । शुभमस्तु । लेखक पाठकयोः ॥

## मु० श्री० हं० वि० सं० शास्त्र संग्रह. वडोदरा.

श्री पृथ्वीचंद्रगुणसागररास. प्र. २२७

संवत् १५५६ वर्षे आषाढ शुदि ७ शनौ पत्तननगर वास्तव्य सा० गेलाभणनार्थं । पूज्याराध्य वाचनाचार्य श्रेणिशिरोमणि पं. ज्ञानशीलगणि शिष्येण लिखितः ॥ अप्पडंरंजि मरंजिपर । परंजिउंतिकांइ । जइरं जिसिमन अप्पणउं । पामिसि सुख सयाइं ।

## श्री. जैन. सं. ज्ञानभंडार. पाटण.

श्रीसूत्रकृतांगसूत्रम् । प्र. २२८

संवत् १५५६ वर्षे माघ शुदि १४ बुधे श्रीमदंचलगच्छे श्री पं. जयकेसरसूरि विजयराज्ये तत्पट्टे श्री सिद्धांतसागरसूरि गुरुभ्यो ॥

## प्र. श्री. कां. वि. सं. शा. सं. वडोदरा.

श्रीकर्मविपाकसूत्रम् प्र. २२९

संवत् १५५७ वर्षे आषाढ वदि १३ गुरु जोशी पीतांबर लिपितं ॥ श्री ॥ १८ ॥

## श्रीविजयवीरसूरि ज्ञानमंदिर राधनपुर

श्रीकूर्मापुत्रचरित्रम् र. नं २५३९ प्र. २३०

इति श्री कूर्मापुत्र केवली चरित्रं समाप्तं ॥
अस्मिन् ग्रंथाग्रंथ संख्यानुमानं ॥ २१०५ ॥ अनुष्टुपां ॥ छ ॥

स्वस्तिश्रियां धात्र महोरगेंद्र पद्मावती सेवित पादपद्मं ।
अहम्मदावाद पुरावतंसं, श्री पार्श्वनाथं प्रयतः प्रणौमि ॥ १ ॥

जीयाच्च वीरो भुवनैकवीरो, यच्छासनं सूर्यवदत्र चित्रं ।
विभासयत्येव सतां मनांसि, प्रासास्तभावं न कदापि धत्ते ॥ १ ॥

गौतमं गणधरं प्रणमामि नित्यं, यन्नामतः किल सतां तु समृद्धयः स्युः ॥
श्रीमत्सुधर्मगणि रप्यनिशं स पायाद्, यस्यक्रमो विजयते खलु भारतेऽत्र ॥ ३ ॥

तच्छिष्य सुधर्मगणिसंततिशोभिनः श्री चंद्रप्रभाभिध गुरुर्जयताच्चिरं सः ।
स्वीकृत्यय समयगां छत्वर पूर्णमासीं, श्रीपौर्णिमेयगणमेनमिहोद्धार ॥४॥

तत्पट्टपंकज विवोधनसूर्यकल्पाः, श्री धर्मघोष गुरुराज वरा वभूवुः ।
तस्योरुपट्टकुमदैकशशिप्रभाभाः, श्रीसूरयः सुमतिभद्रवरा जयंतु ॥ ५ ॥

तस्यान्वये सद्गुणरत्नराशिः, श्रीभीमवल्लीय कुलावतंसः ।
सदास्फुरच्छुभ्रयशःप्रसारो, जीयाच्चिरं श्रीजयचंद्रसूरिः ॥ ६ ॥

ततः शशांकोज्वलकीर्तिभाजः श्रीभावचंद्रा गुरवो वभूवुः ।
रेजुस्तदीय क्रमशोभवन श्री चारित्रचंद्रा गुरवो गरिष्ठाः ॥ ७ ॥

तत्पट स्फुट पूर्विकाचल शिरः शृंगार सूरत्विष,
स्तर्कव्याकरणागमादि विलस च्छास्त्राब्धि पारस्पृशः ।

विद्यारत्न कलाकलाप कलित स्वांतः क्रियाशालिनः,
श्रीमत श्री मुनिचन्द्रसूरि गरवो जीया सुरे ते चिरं ॥ ८ ॥

विद्यासुंदरभावनां कलयितुं प्रातोयद् द्वतं,
विद्यारत्नममीष्टदेवगुरुपत्पद्मैकसांनिध्यताम् ।
तच्छिष्यो रचयांचकार चरितं कूर्मासुतस्येदकं
विद्यारत्न इति प्रसिद्धिकलितः अश्रुति तिथ्य शब्दके[१५५०]॥१५७७॥९॥

चेतो जहर्ष कुलकं समवीक्ष्य येषां
कुर्म्मासुतस्य समशोधि च यैरिदं तु ।
सश्री हर्षकुलपंडितराजवर्याः,
जीयासुरात्मगुरुराजयुताः सदैव ॥ १० ॥

शास्त्राणि संति बहुकानि यद्यपि लोके
विद्वन्मतानि विबुधैरिदकं तथापि ।
वाच्यं विधाय मयकि प्रसमं प्रसधिं,
कुर्म्माकुमारचरितं सुगमार्थबोधं ॥ ११ ॥

कारकश्रोतृकर्तृणां, देवगुर्वोः प्रसादतः
वाचकस्यायदो भूयात्, मंगलाय पदे पदे ॥ १२ ॥

कुर्म्मापुत्रचरित्रचारुकमलं पद्यादिपत्रावृतं
बह्वर्थप्रसरन्महापरिमलं संप्रीणितवत्य [सार्थात्य]
नानालापककेसरातिसुभगं बोधीन्दिरामंदिरं
विद्वन्मानसमानसे विलसतान्नित्यं स्फुरन्मंगलं ॥ १३ ॥

इति विक्रम संवत् १५५७ प्रशस्तिः ॥ ठे ॥ श्लोक ३१०५ ॥

## श्री जैन विद्याशाला ज्ञानभंडार. अमदावाद.

**श्री कर्मग्रंथम्** प्र. २३१

सं. १५५७ वर्षे फागुण सुदि ५ सोमदिने वा.श्री त्र [ ध ] नो दय शिष्येण वा० जयकेशरिणा लिलेखि ॥ श्री अल्लावर पुरस्थाने श्री अल्लावलपुरे स्ववाचनाय ॥ शुभं ॥

## श्री जैन ज्ञान भंडार. राधनपुर.

**श्रीमभ व्याकरणवृत्तिः** र. नं ३६३० प्र. २३२

ग्रं० ४६०० ॥ सं० १५५७ वर्षे पौष वदि १० ॥ गुरू जोसी पोया लिखितं ॥ ठ ॥

## श्री. मु. वि. शा. सं. छाणी.

श्रीशुकसारिका कथा । प्र. २३३

संवत १५५७ वर्षे चैत्र मासे शुक्लपक्षे नवम्यां तिथौ शनिवासरे अद्येह श्री पत्तन वास्तव्य पुस्तिका लिषित ॥

## श्री जै० सं० ज्ञा० भं० पाटण.

श्रीशतश्लोक वृत्तिः प्र. २३४

स्वस्ति संवत् १५५७ वर्षे मार्गसिर सुदि १४ शुक्रे अद्येह वडली वास्तव्य सांप्रत श्री पत्तनमध्ये प्राग्वाट ज्ञातीय गांधी सोमा सुत सवा सुत नक्षी महिमा अपा लिपितं ॥

## श्री, मु० वि० शा० सं० छाणी.

श्रीशुकसारिका कथा प्र. २३५

प्रशस्तिः ॥ इति कथा ७२ समाप्ता. ॥ छ ॥ छ ॥ संवत् १५५७ वर्षे चैत्र माशे शुक्ल पक्षे नवम्यां तिथौ शनिवासरे ॥ अद्येह श्रीपत्तनवास्तव्य पुस्तिका लिपिता ॥ शुभं भवतु ॥ छ ॥ श्रीवीतरागः ॥ छ ॥ ग्रं० ३५००

## श्री जैन सं० ज्ञा० भं० पाटण.

श्रीआचारांग वृत्तिः प्र. २३६

संवत् १५५८ वर्षे मार्गशिर शुदि षष्ठ्यां भौमे श्री अणहिल्लपत्तने श्री तपागच्छे महोपाध्याय श्री ३ अनंतहंस गणीनां लिपापितं ॥

## पं० प्र० वि० ज्ञा० भं० अमदावाद.

श्रीपृथ्वीचंद्रचरित्रम् प्र. २३७

सं. १५५८ वर्षे कार्त्तिक वद १४ दीपालिकादिने ॥ पूज्य पं० विवेकविजयगणिशिष्य कुशलविजयेन लिखितं ॥

## आ. श्री वि० ल० सू० सं० ज्ञान भंडार. खंभात.

श्रीयशोधरचरित्रम् प्र. २३८

संवत् १५५८ वर्षे अश्वन सुदि १५ गुरौ ॥ श्रीमति गंधार बंदिरे । पं० कुलहंसगणि वाचनकृते लिखितं । पं० रुद्राकेन ॥ श्री ॥

## श्री. जै. सं. ज्ञा. भं. पाटण.

श्रीसूत्रकृतांगसूत्रम् प्र. २३९

संवत् १५५८ वर्षे श्रीतपागच्छ नायक, असमसुखदायक, श्रीलक्ष्मीसागरसूरि राज पद पूर्वाचलअलंकरण सहस्त्रकिरण समान श्री सुमतिसाधुसूरि पट्टप्रतिष्ठित, परमगुरु गच्छनायक भट्टारक पुरंदर श्री हेमविमलसूरि संप्रति विजयमान राज्ये ॥ पं. लक्ष्मीभद्रगणिशिष्य मुख्य विबुध धोरणी श्रेणीमौलिमाणिक्य पं. आनंदमाणिक्यगणि शिष्य सुशिष्य पं० श्रुतसमुद्रगणियोग्यं ॥ श्रीस्तंभतीर्थ वास्तव्य सा० हांसाभगिनी श्री०वाल्हीनाम्न्या, भातृजसो० मांडण सोना पूनादि बहु कुटुंब परिवृत्तया लिखापितं ॥ निजश्रेयसे, तच्च वाच्यमानं बहूनां प्रतिबोधकारकं चिरं जयतु॥ शोधितं पं० श्रुतसमुद्रगणिना वृत्तिविलोकनपूर्वं सुकृतसंभारकृते, स्वपरोपकाराय, श्रीरस्तु ॥

## श्री० नि० वि० जी० मणि पु० चाणस्मा.

श्रीकालिकाचार्यकथा. प्र. २४०

श्रीकल्पा येन हैमाढ्या लेखयित्वा सुवाचिताः
वर्षेऽकेषुतिथि १५५९ ख्याते स्थंभतीर्थे पुरेप्वपि ॥ ६१ ॥
अस्य श्री थावरेंद्रस्य संघेशस्य मुनोमुदे
कृता कथेषा तद्वर्षे, लब्धिसागरसूरिभि. ॥ ६२ ॥
इति श्रीकालिकाचार्यकथा ॥ शुभं भवतु ॥ कल्याणमस्तु ॥

## श्री० मोहनलालजी सं० ज्ञा० भं० सुर्यपुर.

श्री कल्पसूत्रम्.

॥ स्वस्तिश्रीः ॥ ओकेसवंशे विलसच्चरित्रे श्रीदांडडीयेति पवित्रगोत्रे । प्र. २४१
कोठारिसंज्ञेति समस्त्यजेया शाखा विशेषादपि वर्णनीया ॥ १ ॥
तत्राभवत् श्रीव्यवहर्तृमुख्यः श्रीजूठनामाश्रितशुद्धपक्षः ॥
जेठीरितिख्यातिमती प्रियास्य तदंगजो भांपरइभ्यशस्यः ॥ २ ॥
अभूत् प्रिया भावलदेविनाम्नी तस्य प्रियादोषवशामृधाम्नी ।
श्रीसालिगाख्यस्तत आत्मज भाऽपतिः प्रीणितसत्समाजः ॥ ३ ॥

तत्पुत्रो विशदप्रतापमहिमा जाग्रद्यशोमंडल ।
औदार्यादिकनव्यसव्यसुगुणालंकारधारकलः ।
अन्यूनागमलेखनैकचतुरः श्रद्धावतामादिमः
श्रीमान् श्रीव्यवहर्तृडूगर इति श्राद्धः प्रशस्यक्षमः ॥ ४ ॥

तज्जाया शुभशीलसत्यहृदया धर्मैकशुद्धाशया
जाता विल्हणदेव्यगण्यमुदयानिस्तंद्रधर्म्मोत्वया ।
तत्पुत्रो लसदुत्तमैकसुयशाः श्रीतेजपालसिंघ ।
श्रंगाईदयिता गुणालिविदिता तस्यामला वर्त्तते ॥ ५ ॥

तज्जा रणधीराभिधसुराजसिंहाह्वधनाल्यसोमाकाः ।
रामतिगगीचवूकाइति नाम्न्यश्चांगजास्तिस्त्रः ॥ ६ ॥

मुख्यस्य तेषां रणधीरकस्य । कलत्रमिंद्रस्तनयो गपाल्यः ।
सुतांग नएलमदेर्गुणज्ञा । आंवाभिधानश्च विभाति पौत्रः ॥ ७ ॥

तथा द्वितीयस्य च राजसिंहा भिधस्वरं गोरतिरम्यरूपा ।
भार्या विवाभाति भवोदधिं च तितीर्षुरानंदितआप्तवर्गा ॥ ८ ॥

अथो तृतीय श्च धनाह्वयस्या श्रीसंघकायेकरतस्य नित्यं ।
पत्नी घनादे धुरि धार्म्मिकाणां मूलीवटांकूवसुतेसुरूपो (?) ॥ ९ ॥

पुनश्चतुर्थस्य भस्य सोमाभिधस्य धर्म्मार्थरते रतस्य ॥
भार्यालसत् सोमलदेवि नाम्नी मल्हाइकाह्वा तनया चकास्ति ॥ १० ॥

इत्यादिसकलपरिकर समन्वितौ तौ धनाख्यसोमाख्यौ ।
रेजाति जितमानौ संप्रतिकाले विजयमानौ ॥ ११ ॥

सिद्धांतसागरगुरूत्तमसूरिराजपट्टोदयाद्रिदिवसेश्वरसंनि भानां ।
श्रीभावसागरगणेश्वरपुंगवानां
प्राप्तोपदेशमथ षट्तिथिमिर्म्मितेब्दे (१५६० वर्षे) ॥ १२ ॥

स्ववृद्धभातुः सुकृतस्य हेतोः सुश्राविकादेल्हणदेविनाम्न्याः ।
सुवर्णवर्ण सकलैः प्रकारैः श्रीकल्पमालीलिखतां प्रकामं ॥ १३ ॥

यावद्दिनेशः कुरुते प्रकाशं स्थैर्यं वयावद् भजते सुराद्रिः ।
तावन्मुनीनां प्रकरैः प्रमोदात् प्रवाच्यमानं जयताच्चिराय ॥ १४ ॥

इति श्री कल्पप्रशस्तिः ॥ विप्रवडआ ॥ शुभं भवतु ॥

## श्री. जैन. सं. ज्ञा. भं. पाटण.

श्रीआवश्यक अवचूरिः प्र. २४२

संवत् १५६१ वर्षे कार्तिक वदि २ रवौ अद्येह श्री घोघा वेलाकूले महाराजपातिसाह श्रीमहम्मदराज्ये तन्नियुक्त व्यापारी सं. सोमदत्त प्रतिपत्तौ श्रीमद्धर्मभृतां वरिष्टतपसां पं. सत्यविशालगणिप्रमृतीनां तेषामर्थे पुस्तकमिदमलेखि स्वार्थं तथा परोपकाराय ॥

## श्री० आ० क० ज्ञान भंडार. लींमडी.

श्रीनिशीथभाष्यम् प्र. २४३

. ग्रंथाग्रंथगाथा ६५३९ । इति निसीथ भाष्यं समाप्तं । ग्रंथाग्रंथ ७४०० । संवत १५६१ वर्षे श्री खरतरगच्छे श्री जिनहर्षसूरिभिः संथाप्य लिखितं० श्रीरस्तु.

## श्री जै० सं० ज्ञा० भं० पाटण.

श्रीषडावश्यकसूत्रम् वृत्तिः प्र. २४४

संवत् १५६१ वर्षे भाद्रपद मासे, शुक्लपक्षे, पूर्णिमायां १५ तिथौ रविदिने लिखितं ॥ वावडीग्रामे, पिप्फलगच्छे, भ० श्रीकनकप्रभसूरि, तत्पट्टे श्रीमुनिप्रभसूरि अर्पितं, सपरिवार पठनार्थं ॥

## श्री० जै० सं० ज्ञा० भं० पाटण.

श्री सारस्वत प्रक्रिया. प्र. २४५

संवत् १५६१ वर्षे चैत्रवदि पंचमी गुरुवारे श्री नागपुरे पातमहमदराज्ये श्री उपकेशगच्छे कुकदाचार्य संताने भ० श्री सिद्धसूरि शिष्य वा० वीर सुंदर शिष्य श्रीमतिसागर शिष्य ग० श्री ३ देवरत्नेन लिपिता । सांतिरत्न पठनार्थं

## श्री मो० मो० ज्ञा० भं० पाटण.

श्रीसूत्रकृतांगम् प्र. २४६

संवत् १५६१ वर्षे श्रावण सुदि ११ सोमे श्रीभावडार–गच्छे श्री भावदेवसूरि । तत्पट्टे

श्री विजयसिंह सूरि प्राग्वेचागोत्रे संघवी हराभार्या हासलदे पुत्र संघवी वीरा भार्या वीलहणदे पुत्र संगवी भोजाकेन ज्ञान लखापितं दशसहस्रं आलोचननिमित्तं ॥

## मु० श्री० हं० वि० सं० शास्त्रसंग्रह, वडोदरा.

श्रीप्रश्नव्याकरणसूत्रवृत्तिः प्र. २४७

संवत् १५६२ वर्षे पोष वदि २ सोमे अद्येह श्रीपत्तने लिपितमस्ति ॥ श्रीरस्तु ॥ शुभं भवतु ॥

## आ० श्री० वि० मे० सूरि० सं० ज्ञा० भं० अमदावाद.

श्रीमाधवानल कथा. प्र. २४८

संवत १५६२ कालूआग्रामे लिखिता गणिना सुरसुंदरेण कथामिमां ॥

## श्री जैन विद्याशाला ज्ञानभंडार. अमदावाद.

श्रीउपदेशमाला प्र. २४९

संवत १५६३ वर्षे ॥ वीरमग्राम वास्तव्य श्रे० नरबद भार्या श्रा० रमाइ पूत्री श्रा० टांकू सोमी खीमी पठनार्थे लिखिता पुस्तिका श्री तपागच्छ नायक भट्टारक श्री हेमविमलसूरि शिष्य मुख्य पंडित श्री कुलरत्नगणि माणिक्यनंदिगणि श्री माणिक्यमंदिरगणि पं. संयमाणिक्यगणि पं० सहजमंदिरगणि विवेकधर्म मुनि विजयरत्न मुनिभिः श्रेयोऽर्थम् ॥

## श्री. मु. वि. शा. सं. छाणी.

श्री सारस्वत वृत्तिः प्र. २५०

संवत १५६३ वर्षे अषाढ सुदि ८ रवौ श्रीमद् भाकरगच्छे भ० श्रीधनप्रभसूरि तत्पटालंकार पूज्य भट्टारक श्री मुनिप्रभसूरींद्र तत् शिष्य जसतिलकेन लिखितं मुनि चारित्रमेरोरध्ययनार्थं ॥ शुभमस्तु ॥ श्रियमस्तु ॥

## श्री. नि. वि. जी. म. पुस्तकालय. चाणस्मा.

ऋषिमंडलवृत्तिः प्र. २५१

संवत् १५६४ वर्षे चैत्र शुदि पंचमी सोमे अद्येह श्रीमदनहिल्लपुरपत्तने लिखितं ॥ छ ॥ श्री ॥ छ ॥

## श्री० नि० वि० जी० मणी पुस्तकालय चाणस्मा.

श्री ऋषिमंडल वृत्तिः प्र. २४२

फल्गुश्रीनाम श्रमणो, रत्ननामा श्रावकः ॥ सत्यश्री नाम श्राविका एभिः स्तुतं । अवसर्पिण्यां वरचं उः प्रसमं । मुनिवृषभं । उपमावार्थं वंदे । छ । संवत १५६४ । वर्षे चैत्र सुदि पंचमी सोमे अद्येह श्रीमदनहिल्लपुरपत्तने लिखितं ॥ श्री ॥ श्री ॥ श्री ॥

## आ. श्री वि० दा० सू० सं० शास्त्र संग्रह, छाणी.

श्री पुष्पमाला प्रकरणम्. प्र. २४३

प्रशस्तिः ॥ इति श्री पुष्पोपदेशमाला प्रकरणं परिपूर्णं ॥ श्रीः ॥ संवत् १५६४ वर्षे मार्गशिर सुदि पूर्णिमादिने श्री पिप्फलगच्छ नायक भ० देवप्रभसूरिशिष्य मु० गुणप्रभपठनार्थं ॥ श्रीरस्तु ॥ छ ॥

## सा० श्री० पु० श्री० सं० ज्ञा० भं० जयपुर.

श्रीभुवनभानुकेवलीचरित्रम्. प्र. २४४

संवत् १५६४ वर्षे कार्तिक सुदि ११ शुक्रे उपरितनग्रंथो लिखितः तदनुसारतः संवत् १८३९ द्वितीय वैशाख वदि१३ रवौ पूर्णीकृतोऽयं ग्रंथो लिखतेन श्रीलुंकागणाधिराजा नाम पूज्याचार्य श्री ज्ञानचंदजीनांसिष्याणां किशोरचंद्राणां विनेयेन क्षेमचंद्रेण मुनिना स्वस्ति लेखक पाठकयोश्च ग्रंथ ३५०० श्री.

## श्री० जै० सं० ज्ञा० भं० पाटण.

श्रीविवेक विलासः प्र. २४५

संवत् १५६४ वर्षे शाके १४३८ प्रवर्तमाने ज्येष्टमासे वदिपक्षे पंचम्यां तिथौ भृगुवासरे श्रावण नक्षत्रे अद्येह श्रीमद् गंभीरपुर पत्तने श्री आगमगच्छे वृद्धशाषीय महोपाध्याय मुनिसागर शिष्यानुशिष्य उपाध्याय अमरसागरेण स्ववाचनार्थं अथ परोपकारार्थं ग्रंथोऽयं लिपितमिति ॥ ॥ भद्रं भवतु ॥

## श्री० जैन० सं० ज्ञा० भं० पाटण.

श्री ज्ञातासूत्रम्. प्र. २४६

संवत् १५६४ वर्षे माघवदि १ सोमे श्रीतपागच्छे गच्छनायक संप्रति विजयमान परमगुरु श्रीहेमविमलसूरि विजयराज्ये पूज्याराध्य पूज्य कमलभुवनगणि वाचनार्थ । शुभागमगणि॥हंससमय गणि ॥ उदयकमल मुनि सपरिवाराः सिरोही नगरे लिपितं

## मु० श्री० अ० वि० सं० ज्ञा० भं० शिनोर.

**श्री भवभावनाप्रकरणम्.** प्र. २४७

संवत. १५६५ वर्षे चैत्र सुदि २ दिने गुरुवारे श्री **तिमीरी पुर्यां** श्री **तपोरत्नोपाध्यायें-**द्राणां शिष्य वा० **तेजोराज** गणिभिरलेखि ॥ श्रुतमस्तु लेखकवाचकयोः ॥

## श्री० आ० क० ज्ञान भंडार. लींबडी.

**श्री भवभावना प्रकरणम्** प्र. २४८

संवत १५६५ चैत्र सुदि २ दिने गुरुवारे श्री तिमिरीपूर्यां:श्री तपोरत्नोपाध्यायेंद्राणां शिष्यवा० **तेजोराजगणि**भिरलेखि । शुभमस्तु लेषक वाचकयोः ॥

## श्री० जै० आ० पु० सुरत.

**श्री उपासकादि पंचांगानि** प्र. २४९

संवत् १५६६ वर्षे चैत्र शुक्ल त्रयोदश्यां शनौ **श्रीविक्रमनगरे** श्रीवृहत् खरतरगच्छे श्री **जिनहंससूरि** विजयिराज्ये श्री**क्षेमकीर्तिवाचनाचार्या**न्वये वाचक **क्षेमहंसगणि**हंसानां विनेय वा० **सोमध्वजगणि** शिष्यराज वाचनाचार्य **भावराजगणि श्रीक्षेमराजोपाध्यायवरा**स्तेषां विनेयाणुना वा० **कनकतिलक गणिना** एकादशांग सूत्रं वाचितं शोधितं च किंचित् शिष्य परंपरया वाच्यमानं चिरं नंदतु ॥ श्रीर्भवतु श्री श्रमणसंघस्य

श्री **जिनराजसूरीणां** शिष्य वा० श्री **ज्ञानकुशलजी** गणिवराणां शिष्योपाध्यांय श्री **ज्ञानसींहजी गणि** तत्शिष्य सदुपाध्याय श्री **धर्मविशालगणिभिः** स्वपुण्यसंचयार्थं **श्रीकृष्णदुर्गे** भाण्डागारार्थं पुस्तकमिदं कृतं तच्च धृतं स्वगुरूणामादेशात् शिष्य **पं. उदयलाभेन पं. उदयसागर** पं०चिरं० महिमाकुशल चिरं०**नैणसुष** चिरं०**मयाचंद्र** चिरं०**रुघनाथ** प्रमुख शिष्यप्रशिष्य सहितेन ॥ सं. १७५४ वर्षे चैत्रवदि २ वुधे ॥

## श्री. जैन. संघ. ज्ञानभंडार. पाटण.

**श्रीश्रीपालचरित्रम्** प्र. २५०

संवत् १५६६ वर्षे । अषाढ सुदि ९ मंगलवारे । श्री **अलावलपुरे** । श्री **अलावलषांन** विजयराज्ये । श्रीखरतरगच्छे । वा० श्री श्री **भावप्रियगणिवराणां** ॥ श्रीपालचरित्रं लिखितं ॥ शुभं भवतु ॥ १ ॥

## प्र० श्री० कां० वि० सं० शा० सं० वडोदरा.

श्रीसारावलिप्रकरणम् प्र. २५१

सं०१५६६ वर्षे चैत्रमासे शुक्लपक्षे द्वितीयादिने ॥ पूज्याराध्य पं० कमलभुवनगणि शिष्येण लिपतं ॥ छ ॥ श्री गणिविवेकहंसशिष्यगणि विचारहंसपुण्यनिमित्तं पंडितबुद्धिहंसगणिना ज्ञानकोशे मुक्तं ॥

## मु. श्री. दो वि. सं. शा. सं. छाणी.

श्री दीपालिका कल्पम् प्र. २५२

प्रशस्तिः । संवत् १५६७ वर्षे कार्तिक मासे शुक्लपक्षे पंचमी सोमवासरे गणि धीरचंद्रेण लखितं ॥ श्री पूर्णिमा पक्षे । श्री. ६ पद्मशेखर सूरीश्वराणां तत् शिष्य पं० श्री जिनहर्षस्य वाचनार्थं ॥ श्रीरस्तु लेपकपाठकयोः ॥

## श्री० आ० क० ज्ञान भंडार. लींमडी.

श्रीसम्मति तर्क सूत्रम्

श्रीपंचाशक वृत्तिः प्र. २५३

इति दुःखमासमा समय समुद्भूत विततमोह तिमिरभर तिरस्करण तरणतरुण समश्री सिद्धसेन दिवाकराचार्य विरचिता सम्मतिस्समाप्ता । छ । शुभं भवतु । श्री पुस्तकं चिरं नंदतु । श्री : । श्री : । संवत १५६७ । वरषे श्री खरतर गच्छे श्री जिनवर्द्धनसूरिसंताने श्री जिनहर्ष सूरिपट्टे श्री जिनचंद्र सुरिभिरिमानि पंचाशक सूत्रवृत्ति संमतितर्क सूत्राण्यलिख्यंत । श्री स्तंभ तीर्थनगरे ।

## श्री. जैन. संघ ज्ञान भंडार. पाटण.

श्रीप्रवचनसारोद्धारः प्र. २५४

संवत् १५६७ वर्षे श्री खरतरगच्छे श्री जिनहंससूरि विजयराज्ये श्री पुण्यवल्लभोपाध्याया-नां वा. धर्मविलासगणि वा. धवलचंद्रगणि पद्मवल्लभगणि देवप्रभगणिना उद्यमेन शोधिता सोनी भोजापुत्री श्राविका धींपी पठनार्थं लिखिता शोधिता च वाच्यमाना चिरं नंदतु ॥

## श्री मु. वि. शा. सं. छाणी.

श्रीप्रवोध चंद्रोदय नाटकम् ( अन्यदीयम् ) प्र. २५५

संवत पंन्नर वर्षे पूर्वं सप्तप्रभोहि षट् युक्ते (१५६७) पोपे मासे तिमिश्र पक्षेपि पूर्णिमायां वृद्ध तपापक्षे श्री **धनरत्नसूरि** विजयराज्ये पं. प्रकांड पं. श्री ७ **चारित्रसिंह** गणीनां शिष्येण **शांतिमंदिरेण** । **प्रबोध चंद्रोदय** नाम नाट्यं लिखितमस्ति । शुभं भवतु ॥यादृशं.......................दीयते॥ भग्न पृष्टि...............परिपालयेत् ॥ जलात् रक्षेत्.......... पुस्तिका ॥श्री रस्तु॥ शुभं भवतु । पं. **चारित्रसिंहस्य** ॥ श्री.

## आ० श्री० वि० दान० सू० सं० शास्त्रसंग्रह. छाणी.

श्रीमहानिशीथसूत्रम् १७८८ प्र. २५६

सं. १५६७ वर्षे चैत्र वद १३ २ वौ श्री **पत्तननगरोत्तमे**.......

## श्री नित्यविनयजीवनमणी पुस्तकालय. चाणस्मा.

श्री लीलावती संज्ञापाटी २ नं. ४४९१ प्र. २५७

संवत १५६७ वर्षे आषाढ सुद ५ गुरुवासरे ॥

## मु. श्री. हं. वि. सं. शास्त्र संग्रह. वडोदरा.

श्री शत्रुंजय महात्म्यम् प्र. २५८

संवत् १५६७ वर्षे शाके १४३२ प्रवर्तमाने ॥ आसोज मासे शुक्लपक्षे चतुर्थ्यां तिथौ शनिवासरे । स्वाति नक्षत्रे **क्यामपुर नयरे** । **रुद्रपल्ली गच्छे** भ. श्री **हर्षसुंदरसूरि** । तत्पट्टे भ. श्री **देवसुंदरसूरि** । तत्पट्टे भ. श्री **सोमसुंदरसूरि** । तत्पट्टे भ. श्री **गुणसमुद्रसूरि** । तत्पट्टे भ. श्री **हर्षदेवसूरि** । तत्पट्टे भ. श्री **हर्षसुंदरसूरि** । तत् शिष्य उपाध्याय **सोमसंभव** । तत् भ्रात् **सोमदत्त** तत् शिष्य वा. श्री **दयासुंदर** । तत् शिष्य वा. श्री ५ **धर्मसुंदर** तत् शिष्य **मतिसुंदरेण** लिषतं॥

## श्री हु. मु. सं. ज्ञा. भं. सूर्यपुर.

श्री चंद्रप्रज्ञप्तिः प्र. २५९

संवत् १५६८ वर्षे ॥ अंचलगछे । श्री **माणिक्यकुंजरसूरि** गुरूणां शिष्य श्री **विजयहंस**

महोपाध्याय स्वहस्तेन स्वशिष्य पंडित प्रवर पं० पुण्यप्रभ गणिचेला । हर्षलाभ वाचनार्थं लिखित मिदं चंद्रप्रज्ञप्ति सूत्रं ॥ शुभं भवतु लेपकपाठकयोः ॥ श्री । श्री । श्री ॥

## प्र. श्री. कां. वि. सं. शा. सं. वडोदरा.

श्रीशीलोपदेशमाला वृत्तिः प्र. २६०

॥ संवत् १५६८ वर्षे मार्ग शुदि ६ रवौ । श्री श्रीमालज्ञातीय ॥ श्रेष्ठि देधर सु० आल्हणसी । सु० पाल्हणसी । सु० सा० जइता । सु० सा० राउल । भार्या प्रचकु । सु० सा० सीधर । भार्या साही । सु० सा०जुठा । मेघा । भावड । पांचा मेघा भार्या लाडिकी । सु० सा० सोना । पांचा सु० सा० घुसा । भार्या पीदी । सु० वर्द्धमान । पासा तथा जुठा श्री संघभार घूर्यौदार्यादिगुणाकीर्णः समभूत संघपतिः साधुर्जुठाभिधः श्रेष्ठः ॥ १ ॥

अथ जुठा संघपतेः जसमादे धर्मचारिणी ह्यासीत्
तत्कुक्षेः समुद्भूताः पंचैते पांडुतनयाभाः ॥ २ ॥
साधुर्महिपतिस्सौम्यः रूपाक्षोधिभीयोत्तमः
तार्तीयक श्चतुर्थावि(यो) को । धर्मकर्म (णु) कर्मठः ॥ ३ ॥
तुर्यस्तेपु(षु) नवसाधुः हर्षाख्यो हर्षदः सतां ।
सहसाहः । पंचमस्तेषां । प्रविणाः पंच बांधवाः ॥४॥
पश्चाइ महिपतितो धर्मभार धुरंधरौ ॥
डाहा वस्ताभिधानौ द्वौ अभूतां (व) वृषभोपमौ ॥ ५ ॥
डाहीया पत्नीगदू सु० जीवराज ।
सा० छवी राजा । भोजा । जेठा । धर्मसी ।
संघपतिः चौयाभिख्यः । मल्हाइपति भूव (च) कृतमुख्यः
तेजपाल कर्मसी कृत सौख्यः ।
लब्ध सद्गुरु मुखाद्वरशिक्षः ॥ ६ ॥
श्राद्ध चौथराजेन धर्मकर्म प्रकुर्वता ।
समुज्वलं यशः प्राप्य चोतितं कुलमात्मनः ॥७॥
श्री साधर्मिक वात्सल्य तीर्थयात्रासु विस्तरां ।
संघपूजा ज्ञान भक्ति परोपकृतिकादिकं ॥८॥

ईसरसूरि तत्शिष्य वा०कर्मसागर उपदेशेन काठरड गोत्रेजा नामदोशी महिपाल भार्या मांणकदे पुत्रदोसी जीवा भार्या जीवादेपुत्र दोसी वीलण. दोसी धमा दोसी लोला समस्त कुटुंब सहितेन चतुर्दशी उद्यापने लिखाप्य प्रदत्तं श्रीगुरुभ्यः शुभं भवतु श्रीरस्तु ॥

## श्री. जैन वि. शा. ज्ञा. भं. अमदावाद.

श्री उपाशक दशांगसूत्रम्. प्र. २६६

संवत १५७० वर्षे भाद्रपद वदि ४ रवै । श्री पूर्णिमा पक्षे भीमपल्लीय भ० श्री जयचंद्रसूरि पट्टे श्री भावचंद्रसूरिपट्टे श्रीचारित्रचंद्रसूरि तत्पट्टे जयवंता श्री मुनिचंद्र सूरिशिष्य वा० जयराजेन स्वपुण्यार्थं उपाशक दशांग लिपापितं ॥ श्रीरस्तु ॥

## श्री० जै० सं० ज्ञा० भं० पाटण.

श्री ठाणांगवृत्तिः प्र. २६७

संवत् १५७० वर्षे श्री बृहत् खरतर गच्छे श्री जिगसागरसूरिपट्टे श्री जिनसुंदरसूरि पटे श्री जिनहर्षसूरि पट्टालंकार श्री जिनचंद्रसूरि विजयराज्ये श्री कमलसंयमोपाध्यायानामुपदेशेन श्री ओकेशवंशे श्री सूराणा गोत्रे ॥ सं. चांपा भार्या सं० चांपलदे पुत्र सं० सहसमल्ल भार्या सं. भीमी पुत्र सं. विजयसिंह भार्या सं. मटकू सोमा इत्यादि परिवार युतया भीमी श्राविकया कोट्युद्यापने श्री ठाणांग वृत्तिः लेखयांचक्रे ॥

## श्री० जै० आ० पु० सुरत.

श्रीधर्मरत्नवृत्तिः प्र. २६८

संवत् १५७० वर्षे पोष मासे कृष्णपक्षे । अमावास्यां तिथौ । बुधदिने । श्री अणहिलपुर-पत्तन वास्तव्य । अभ्यंतर नागर ज्ञातीय । त्रवाडी हरिदास लिष्यतं ।

## पं. श्री प्रतापविजयजी ज्ञान भंडार. लवारनी पोळ अमदावाद.

अनुयोगद्वार सूत्रवृत्तिः प्र. २६९

स्वस्तिश्री प्रदवर्द्धमान भगव प्रासादत् विभ्राजिते, ।
श्री संडेरपुरे सुरालय समे प्राग्वाट वंशोत्तमः ॥
आभूर्भुरियशा अभूत् सुमतिभूर्भूमि प्रभु प्रार्थित ।
स्तज्जातोऽन्वय पद्मभासुररविः श्रेष्ठी महानासडः ॥ १ ।

सन्मुख्यो मोपनामा नयविनयनिधिः सूनुरासीत्तदीय
स्तद्भ्राता वर्द्धमानः समजनि जनतासु स्वसौजन्यमान्यः।
अन्यूनान्यायमार्गापनयनरसिकस्तत्सुत श्चेडसिंहः
सप्तासजत् ( संततत्तनूजाः ) प्रथितगुणगणाः पेथडस्तेषु पूर्वः ॥ २ ॥

नरसिंहरत्नसिंहो चतुर्थमल्लस्ततस्तु मुंजालः
विक्रमसिंहो धर्मण इत्येतस्यानुजाः क्रमतः ॥ ३ ॥

संडेरकेऽणहिलपाटकपत्तनस्यासन्ने य एवनिरमापय दुच्चचैत्यं।
स्वस्वैः स्वकीय कुलदेवत वीरसंशंक्षेत्राधिराज सतताश्रित सन्निधानं ॥ ४ ॥

यासावनीनेन समे च जाते, कलौ कुतोऽस्थापयदेव हेतोः।
वीजापुरं क्षत्रिय मुख्य वीजा सौहार्दतो लोककरार्द्धकारी ॥ ५ ॥

अत्र रीरीमय ज्ञातानंदनप्रतिमान्वितं।
यश्चैत्यं कारयामास, लसत्तोरणराजितं ॥ ६ ॥

योऽकारयत्सचिवपुंगव वस्तुपाल--
निर्मापितेऽर्बुदगिरिस्थित नेमिचैत्ये।
उद्धारमात्मनइव भूडतोऽप्यपारसंसार दुस्तरणवारिधिमध्य इध्यः ॥ ७ ॥

गोत्रेऽत्रैवाप्तबिंबं, भीमसाधुविधिप्सितं
यं पित्तलमयंहमदढमर्दयसंधिमकारयत् ॥ ८ ॥

चरम जिनवरेंद्र स्फारमूर्ति विधाप्य
गृहिजिनवसतौ प्रतिष्ठिपत् शुभ्रलग्ने।
पुर उरुतरदेवौकः स्थितायां च तस्यां
समहगतिलधोः श्रीकर्णदेवस्य राज्ये ॥ ९ ॥

खरस समयसोमे (१३६०) बंधुभिः षड्भिरेव,
सहसम सुविधीनां साधने सावधानः।
विमलगिरिशिरः स्थादीश्वरे चोन्नयंते
यदुकुलतिलकार्मं नेमिमानम्य मोदात् ॥ १० ॥

निजमनुजभवं यः सार्थकं श्राक् चकार विहितगुरुसपर्यःपालयन् सांघपत्यं ।
कलसकलकलासत्कौशकी निष्कलंकः
पुनरपि पडकार्षीद् यो हि यात्रास्तथैव ॥ ११ ॥ त्रिभिः कुलकं

मुनिमुनि यक्ष ( १३७७ ) मितेऽब्दे
दुर्भिक्षविलक्षण दीनजनलक्षान् ।
वीक्ष्यातुलधन्यानां दानात् स्वस्थांश्च यः कृतवान् ॥ १२ ॥
समयश्रुतिफलमतुलं सुगुरोर्योऽथैकदाऽवबुध्य सुधीः ।
सकलं विमलं सततं सदागमं श्रावय मम त्वं ॥ १३ ॥

इत्यर्थितवांस्तस्मै
गुरौ प्रवृत्तेऽकरोत्तथा कर्तुं ।
तद्गमहावीरगौतमनामार्चीं रैरजतटंकैः ॥ १४ ॥
तेनार्हणा धनेनाशुश्चेतुष्कं सेत्यादि
सूरिवचनात् क्षेत्रनवक उप्तवान् वित्तं लेखयदाप्तोकितकोशः ॥ १५ ॥
त्रिभिः कुलकं

तत्तनय पद्माव्हस्तदुद्वहो लाडणस्तदंगभवः ।
अस्ति स्मालणसिंहस्तदंगजो मंडलिक नाम ॥ १६ ॥

श्रीरेवतार्बुदसुतीर्थमुखेषु
चैत्योद्धारानकारयदनेकपुरेष्वनल्पैः
न्यायार्जितैर्धनभरैर्वरधर्मशाला यः सत्कृतो निखिलमंडल मंडलीकैः ॥१७॥

वसुरसभुवन प्रमिते ( १४६८ )
वर्षे विक्रमनृपाद् विर्तीर्जितवान् ।
दुष्कालं समकालं बहुधान्यानां वितरणाद्यः ॥ १८ ॥
वर्षेषु सदासप्तत्यधिक चतुर्दशशतेषु ( १४७७) यो यात्रां
देवालयकलितां किल चक्रे शत्रुंजयाद्येषु ॥ १९ ॥
श्रुत लेखन संघार्चा प्रभृतिनि बहूनि पुण्यकार्याणि
योऽकार्षीद् विनिधानि पूज्य जयानंदसूरिगिरा ॥ २० ॥

व्यवहार आइयाख्योऽभूदक्षस्तत्तनुज एव विजिताक्षः।
वरमणकाई नाम्नी सत्यवती जन्यजनि तस्या ॥ २१ ॥
तत्कुक्ष्यनुपममानसकासारसितच्छदत्रयः पुत्राः।
अभवन् श्रेष्ठाः पर्वत डुंगर नरवद सुनामानः ॥ २२ ॥
तेष्वस्ति पर्वताख्यो लक्ष्मीकांतः सप्तवीरेण
पोइआप्रमुख कुटंबैः परीवृतो वंशशोभाकृत् ॥ २३ ॥
डुंगरनामा द्वितीयः स्वचारु चातुर्यवर्य मेधावान्।
पत्नीतज्जा मंगादेवी रमणः पन्हाख्यसुतपक्षः ॥ २४ ॥
स्वकारितार्हत्प्रतिमा प्रतिष्ठां, विधाप्य तौ पर्वत डुंगराभिधौ
वर्षे हि नंदेषु तिथौ १५५९ च चक्रतुः
श्रीवाचकस्थापनसन्महोत्सवं ॥ २५ ॥
खर्तुतिथिमित (१५६०) समायां यात्रां तौ चक्रतुः सुतीर्थेषु।
जीरापल्लीपार्श्वार्बुदाचलाद्येषु सोल्लासं ॥ २६ ॥
गंधारमंदिरे तौझलमल्युगलादिसमुदयोपेताः।
श्रीकल्पपुस्तिका अपि दत्वा रिक्थं च सर्वशालासु ॥ २७ ॥
कृतसंघसत्कृती चावाचयतां तौ च रुप्यनाणकयुग्।
ददतु (तौ च) सितापुंजं समस्ततन्नागरिकवणिजां ॥ २८ ॥
कृतवंतावित्यादिविहित चतुर्थव्रतादरौ सुकृतं
आगमगच्छेशश्रीविवेकरत्नाख्यगुरुवचनात् ॥ २९ ॥
अर्योत्तमौ पर्वतकान्हनामकौ, सार्योत्तमौ सूरिपदप्रदापने।
आकारितानां च समानधर्मिणां, नानाविधस्थान समागतानां ॥ ३० ॥
पुंसां दुकूलादिकदानपूर्वकं, सम्यक्सदर्शनसाधुपूजनात्।
महामहं तेनतुरुत्तरं तौ, पवित्र चित्तौ जिनधर्मवासितौ ॥ ३१ ॥ युग्मं ॥
आगम गच्छ विभूतां सूरि जयानंदसद्गुरोः क्रमतः।
श्रीमद् विवेकरत्न प्रभु सूरीणां सदुपदेशात् ॥ ३२ ॥
शशिमुनितिथि (१५७१) मित वर्षे समग्र सिद्धांतलेखनपराभ्यां।
व्यवहार परवत कान्हभ्यां सु-(?) रसिकाभ्यां ॥ ३३ ॥

निजमानसमोदभरादलेखि निरुपमविचित्ररचनाढ्या ।
अनुयोगद्वाराणां वृत्तिरियं सा चिरं जयतात् ॥ ३४ ॥

( पछीथी पाछळना भागमां कागळ चोडेलो होवाथी वांची शकातो नथी. )

## श्री जैन विद्याशाला ज्ञान भंडार. अमदावाद.

श्रीओघ निर्युक्तिः र. नं. ११५ प्र. २७०

स्वस्ति श्रीप्रद वर्द्धमान भगवत्प्रासादविभ्राजिते,
श्रीसंडेरपुरे सुरालयसमे प्राग्वाट वंशोत्तमश्चः ॥
आ भूर्भूरियशा अभूत् सुमतिर्भूर्मिप्रभुप्रार्थितः
तज्जातोऽन्वयपद्मभासुररविः श्रेष्ठी महानासडः ॥ १ ॥

सन्मुख्यो मोपनामा नयविनयनिधिः सूनुरासीत्तदीय
स्तद्भ्राता वर्धमानः समजनिजनतासुखसौजन्यमान्यः ।
अन्यूनाऽन्यायमार्गाऽपनयनरसिकस्तत्सुतश्चंद्रसिंहः
सप्तासंस्तत्तनूजाः प्रथितगुणगणाः पेथडस्तेपु पूर्वः ॥ २ ॥

नरसिंह रत्नसिंहौ चतुर्थमल्ल स्ततस्तु मुंजालः ।
विक्रमसिंहो धर्मण इत्येतेऽस्याऽनुजाः क्रमतः ॥ ३ ॥

संडरकेऽणहिलपाटकपत्तनस्यासन्ने य एव निरमापय दुच्चचैत्यं ।
स्वस्वैः स्वकीय कुलदैवत वीरसे
शं(ष)क्षेत्राधिराज सतताश्रितसंनिधानं ॥ ४ ॥

वासावनीनेन समं च जाते, कलौ कुतोऽस्थापयदेव हेतोः ।
वीजापुरं क्षत्रियमुख्य वीजासौहार्दतो लोककराअर्धकारी ॥ ५ ॥

अत्र शैरीमयज्ञातनंदनप्रतिमान्वितं
यश्चैत्यं कारयामास, लसत्तोरणराजितं ॥ ६ ॥

योऽकारयत्सचिवपुंगववस्तुपाल निर्मापितेऽर्बुदगिरिस्थितनेमिचैत्ये ।
उद्धारमात्मन इव त्रुडतो ह्यपारसंसार दुस्तरणवारिधिमध्य इद्धः ॥ ७ ॥

गोत्रेऽत्रैवाचाम्रबिंबं भीमसाधु विधिप्सितं
य: पित्तलमयं हैमदृढसंधिमकारयत् ॥ ८ ॥

चरमजिनवरेंद्रस्फारमूर्तिं विधाप्य,
गृहजिनवसतौ प्रातिष्टिपत् शुद्धलग्ने ।
पुर उरुतर देवौकःस्थितायां च तस्यां
समहमतिलघोः श्रीकर्णदेवस्य राज्ये ॥ ९ ॥
स्वरससमय सोमे बंधुभिः षड्भिरेव
सममिह सुविधीनां साधने सावधानः ॥
विमलगिरि शिरःस्थादीश्वरं चोज्जयंते
यदुकुलतिलकाभं नेमिमानम्य मोदात् ॥ १० ॥
निजमनुजभवं यः, सार्थकं श्रावकश्कार (सार्थकं चकार),
विहित गुरुसपर्यः पालयन् सांघपत्यं
कलसकलकलासत्कौशली निष्कलंकः
पुनरपि षडकार्षीद् यो हि यात्रास्तथैव ॥ ११ ॥ त्रिभिः कुलकं ॥
मुनि मुनि यक्ष (१३७७) मितेऽब्दे
दुर्भिक्षविलक्षदीनजनलक्षान् ।
वीक्ष्या अतुलान्ना(क्ष्यातुलयान्या)नां
दानान् स्वरथांश्च यः कृतवान् ॥ १२ ॥
समयश्रुतिफलमतुलं स्वगुरोर्योऽथैकदाऽवबुध्य सुधीः ।
सकलं विनतं सततं सदागमं श्रावय मम त्वं ॥ १३ ॥
इत्यर्थिनवांग्नस्मै गुरौ प्रवृत्तेऽकरोत्तथा कर्तुं ।
तदागमगवीतनैतन्नानाचार्यै रैजनटंकैः ॥ १४ ॥
तेनार्हन्मान्येनाऽस्मयदाप्तोक्तिकोश सुधनुंज्यं (मनुपरतं)
सोऽयमिह नरविजनान् लेखनयुक्त उत्तवान् वित्तं ॥ १५ ॥ त्रिभिः कुलकं
तत्तनयः पश्चाद् स्वसुकृतौ माटणास्तदंगभवः ।
भ्रातृस्य माढणसिंह स्तदंगजो मंडलिकनामा ॥ १६ ॥

